श्रीगणेशायनमः महोमहत्समारध्यजलोत्सर्गमयोक्तवान् प्रतिष्ठांसर्वदेवानांनीलकंठोवदत्यसौ
१ जज्ञेपितामहतनोः खलुकश्यपोयस्तस्मादजायतमुनिस्तुविभांडकाख्यः तंपुत्रिणांधुरमरोपयदृ
ष्यशृंगस्तस्यान्वयेप्यजनिशृंगिवराभिधानः २ तस्मिन्वंशेमहतिवितते संगराख्येनृपाणां राजाकर्णःसम
जनियथासागरेशीतरश्मिः कीर्त्यायस्यप्रथिततरयाश्रोत्रजातेभिपूर्णेकर्णस्यापिप्रवितत कथानावका
शंलभंते ३ विशोकाख्यदेवस्ततस्तत्सुतोभूद्विशोकीकृतायेनसर्वाधरित्री ततोप्यासराजास्तशत्रुस्ततोभू
द्वयाख्योरयेणैवसर्वाहितघ्नः ४ बभूवाथवैराटराजस्ततोभून्नृपोमेदिनीवल्लभोबीढराजः ततोब्र
ह्मदेवस्ततोमन्युदेवस्ततोभून्नृपश्चंद्रपालाभिधानः ५ शिवगणाख्यनृपःसमजन्ययोशिवगणाख्यपुरंप्र
चकारयः शिवगुणेनसमःसकलैर्गुणैःशिवशिवप्रथमोगणनासुयः ६ रोलिचंद्रइतितत्तनयोभूत्क्रमेसे
ननृपतिस्तमथानु लोकपोनरहरिर्नृपराजोरामचंद्रइतितत्तनुजातः ७ यशोदेवस्ततोजातस्ताराचंद्रनृप
स्ततः चक्रसेनस्ततोराजाराजसिंहनृपोपतः ८ ततोप्यभूद्भूपतिसाहिदेवःस्वकीर्तिभिर्निर्जितदुग्धसिं

प्र॰म॰ २

न्केतथेति तत्रैव आषाढे द्वे तथामूलमुत्तरात्रयमेवच ज्येष्ठाश्रवणरोहिण्यः पूर्वाभाद्रपदास्तथा हस्ताश्विनीरेव
तीचपुष्योमृगशिरस्तथा अनुराधातथास्वातीप्रतिष्ठासुप्रशस्यतइति अत्राषाढेद्वेइत्यनेनैवोत्तराषाढाप्रा
प्तावप्युत्तरात्रयपदस्युत्तराफाल्गुन्युत्तराभाद्रपदयोरर्थवत् नारसिंहे तथामहाश्विनोमासउत्तमः सर्वकाम
दः देवीतत्रसदाशक्रपांसुनापिप्रतिष्ठिता भवनेफलदापुंसांकर्कस्थेचबृहस्पतौ नतिथिनेचनक्षत्रंनोप
वासोत्रकारणम् मातृभैरववाराहनारसिंहत्रिविक्रमाः महिषासुरहंत्र्यश्चस्थाप्यावैदक्षिणायने कश्चिन्नि
षेधः आर्द्रादिकेस्वातिविरामकालेनस्त्रह्रदंदशकेस्थितेऽर्के विवाहचौलव्रतबंधदीक्षासुरप्रतिष्ठादि
नकार्यमेवेति अथसंभाराः अर्कादिग्रहसमिधांप्रत्येकमष्टशतंसंक्षेपपक्षे आज्यचर्वादि लोकपालादिया
गाय पलाशादिसमिधांप्रत्येकमष्टसहस्रमष्टशतंवा पुष्पमालाः कुंकुमंकर्पूरः कस्तूरीचंदनंगुग्गुलुधूपः।
दहनंआरार्तिकं घंटापादुकादर्पणं वलिसामग्रीपायसभक्ष्यभोज्यनैवेद्यं होमार्थमाज्यतिलयवास्तनफ
लादिकं प्रतिकुंडंविष्टरास्त्वत्वारः प्रतिकुंडंस्त्रुकस्त्रुवौ आसनानि त्रिसूत्री श्वेतोर्णासूत्रं सर्वतोभद्रादिरच

राम॰ २

धुः अभूत्ततः श्रीभगवंतदेवः सदैवभाग्योदयवान् क्षितीशः ९ यद्दानद्रविणाद्रिनिर्जितवपुः स्वर्णाचलो लज्जया दूरे स्तब्धतुलाहृते निविशते नो यत्र पुंसांगतिः किंच त्रस्यदरातिवामनयनानेत्रांबुभिर्वर्धितस्ते जोग्निर्वडवामुखोत्थहुतभुक्तुल्यः कथं नो भवेत् १० आज्ञप्तस्तेन राज्ञा विबुधकुलमणिर्दाक्षिणात्यावतंसो भट्टश्रीनीलकंठः स्मृतिषु दृढमतिर्जैमिनीये द्वितीयः आज्ञामादाय मूर्ध्ना सविनयममुना तस्य सर्वा न्निबंधान् दृष्ट्वा सम्यग्विविच्य प्रविततकिरणस्तन्यते भास्करोयं ११ प्रतारकैराहृतमत्र किंचिन्मया तु निर्मूलतया तदुज्झितं ऊनोक्तिता नो न हि तेन कावित्त्वपुष्पहीनापचितिर्न हीयते १२ संस्कारा चारकाला समुचितरचनाः श्राद्धनीती विवादो दानोत्सर्गप्रतिष्ठा जगति जयकराः संगताः प्रायोनुबद्धाः प्रायश्चित्तं विशुद्धिस्तदनु निगदिता शांतिरेवं क्रमेण ख्याता ग्रंथेत्र सुद्धेबुधजनसुखदा द्वादशैते मयूखाः १३ भगवंतभास्कराख्यग्रंथेस्मिन् शिष्टसंमते च ततः प्रतिष्ठाविधिमयूखः प्रतन्यते नीलकंठेन १४ तत्र तत्कालो विष्णुधर्मोत्तरे चैत्रे वा फाल्गुने वापि ज्येष्ठे वा माधवे तथा माघे वा सर्वदेवानां प्रतिष्ठा शुभदा सिते रिक्तान्यतिथिषु स्यात्सा वारे भौममा

मार्कंडेयपुराणे स्थापितं लिंगं भवेद्धरद्ध्योगदं मिनि निम् सिंधौ ॥ = ॥ अष्टोत्तरे प्रतिष्ठा स्यादयने भुक्तिमीहतां ॥ दक्षिणे तु मुमुक्षूणां मलमासे न सा द्वयोरिति ॥ शैवसिद्धांतशेखरेप्युक्तेः उत्तरायणे प्रवेशात्पूर्वं माघादौ प्रतिष्ठा भवति ॥ मुक्तिकामानां तु दक्षिणायनेपि भवति ॥ = २ = ॥

प्र॰म॰ धान्यानि प्रतिमार्थे शय्या सोपस्करा श्वेतवस्त्रं चामरं विचित्रवितानं त्रयोदुकूलपट्टाः ऋत्विग्वरणसाम

३ ग्री शिल्पिवस्त्रयुगमित्यादि संपादितसंभारो मूर्तिप्रतिष्ठादिनात्प्राक् सप्तमदिने पंचमदिने त्रिदिने द्विदिने सद्यो

वा प्रासादाग्रे उत्तरे पूर्वे वा षोडशद्वादशदशहस्तं वा मंडपं कृत्वा तन्मध्ये चतुरस्रां सप्तहस्तां पंचहस्तां चतुर्हस्तां

वा हस्तोच्छ्रितां वेदिं मंडपोत्तरे तदर्द्धेन तृतीयभागेन चतुर्थेन वा भागेन चतुर्द्वारं स्नानमंडपं तत्र वेदिकात्रयं च

३ कृत्वा शिल्पिस्थानात्प्रासादप्रादक्षिण्येन देवं तत्रानीयासने निधायाचांतः प्राणानायम्य मासाद्युल्लिख्यास्यां

मूर्त्तौ लिंगे वा देवकलासान्निध्यार्थमायुः श्रीसर्वफलाक्षय्यसुखकाम ईश्वरप्रीतिकामो वाऽमुकमूर्तेर्लिंगस्य वा

प्रतिष्ठां करिष्ये इति संकल्प्य गणपतिपूजनं पुण्याहवाचनं कृत्वा मत्तिणयागसिध्यर्थं आह्मेतत्सुदुर्लभं ॥

यजनायात्मनः शक्यं करिष्ये मातृपूर्वकमिति मंत्रमुक्त्वा मातृपूजनं नांदीश्राद्धं च कृत्वाऽऽचार्यं कृत्वा द्वात्रिंशत् एम॰

षोडशाष्टौ चतुरो वा ऋत्विजोऽष्टौ चतुरो वा द्वारपालान्वृत्वा तान्संपूज्य येन्मधुपर्कादिना सदस्य वरणमप्यत्रेति त्रि ३

विक्रमादयः ततो मंत्रमूर्त्तिर्भवान्नाथ संसारोच्छेदकारकः देवः पूजार्हो यथा स्यात्कुरु धर्मोद्गतिं च नः संसार

२ ॥ मुक्तामाणिक्यवैडूर्यगोमेदा वज्रविद्रुमौ पुष्परागं मरकतं नीलं चेति यथाक्रमात् ॥ २

नाथैः श्वेतरक्तपीतनीलकृष्णवर्णकाः स्नपनकलशाः पंचपल्लवाः कदलीस्तंभाः पताका दश ध्वजाश्च दश
तेषां वेणुदंडाः वज्रमौक्तिकवैडूर्यशंखस्फटिकपुष्परागेंद्रनीलमहानीला इति रत्नाष्टकं हरितालमनःशि
लाभ्रकृष्णांजनमाक्षिककौसीसस्वर्णमाक्षिकगैरिका इत्युपधात्वष्टकं तिलयवमुद्गगोधूमनीवारश्यामा
कसर्षपव्रीहय इति बीजाष्टकं सुवर्णरजतताम्रलोहत्रपुसीसरं गरीत्याख्यधात्वष्टकं मधुपर्कपात्रं सौव
र्णं वा ताम्रं वा अर्घपात्रं शक्त्यैकद्वित्रिमाषसुवर्णशलाका स्थापनीयकलशरत्नानि षोडशद्वारकलशाः अ
ष्टौ लोकपालकलशाः वेदिकलशाश्चत्वारः वास्तुमंडलकलशाः कुंडकलशाः कुंडसंख्यया। निद्राकल
शाः स्नपनकलशाः पंचचत्वारिंशत् कलशसंख्यया शरावाणि धारासहस्रान्वितौ कलशौ गजाश्वस्थान
वल्मीकसंगमनदीकूलह्रदवराहोत्खातराजद्वारमृदः मुरामांसीवचाकुष्ठशैलेयहरिद्रादारुहरिद्रासटीचं
पकमुस्ता इति दशसर्वौषध्यः पंचगव्यं पृथक् पृथक् व्रीहितिलयवगोधूमनीवारश्यामाकमुद्गा इति सप्त

टिप्पणी। पंचमी च द्वितीया च तृतीया सप्तमी तथा। दशमी पूर्णिमासी च तथा श्रेष्ठा त्रयोदशी। आसु प्रतिष्ठाविधिर्वतहृतां बहुफलाभवेत्। बुधो बृहस्पतिः शु
क्रस्त्रयोप्येते शुभग्रहाः। एभिर्निरीक्षितं लग्नं नक्षत्रं च प्रशस्यते। शुभे लग्ने शुभस्थाने शुभे क्रूरविवर्जिते लग्ने कुर्यात्प्रतिष्ठाविधिमुत्तमं। अयने विषु
वे तद्वत्षडशीतिमुखे तथा। एतेषु स्थापनं कार्यं विधिदृष्टेन कर्मणा। आजापत्येषु शयने श्रवणेषु स्थापनं तथा। मुहूर्ते स्थापनं कुर्यात्पुनर्ब्राह्मे विचक्षण

म·म· र्येत् द्वारशाखयोर्ध्रुवमध्वरं चेति वसुद्वयमर्चयेत् शाखामूलस्थयोर्धान्यराश्योरुपरि रत्नगर्भौ प्रशांत शिशि
४ रनामानौ कलशौ प्रतिष्ठाप्य पूजयेत् ततो द्वारदेशे इंद्रमावाह्य संपूज्य नमस्कृत्य इंद्राया हि चित्रभानो इति
पीतां पताकां ध्वजं चालभ्य त्रातारमिंद्रमिति तां तोरणोपरि निदध्यात् इंद्रं वइति इंद्राय घृतोदन बलिदानं
4 अग्निमीळे इत्यृग्वेदं पूजयेत् ऋग्वेदः पद्मपत्राक्षो गायत्रः सोमदैवतः अत्रिगोत्रस्तु विप्रेंद्र ऋत्विक् त्वं मे
मखे भवेति ध्यानं तत्र श्रीसूक्तं पावमानं च सोमसूक्तं सुमंगलम् पौरुषं रुद्रसूक्तं च वामदेव्यं तथैव चेति द्वा
कलशे ६ रपालजपः अथाग्नेयकोणे अग्नये नम इत्यग्निमावाह्य पूजयेत् अग्न आयाहीति रक्तध्वजपताकालंभः
त्वं नो अग्न इति पताकोच्छ्रयः अग्निं दूतमिति घृतोदनबलिः याम्ये सुभद्रतोरणाय नमः औदुंबर तोरणे नं यज्ञं
रक्ष सर्वविघ्नान्निवारयेति पूजयेत् शृंगेषु पूष्णे नमः मित्राय नमः वरुणाय नम इत्यादि सन्यासः द्वा द्वारशाखयोः रा·
सोमाय० आपाय नम इति वसुद्वयमर्चयेत् शाखामूलयोः पर्जन्याशोकनामानौ कुंभौ प्रतिष्ठाप्य पूजयेत् ४
ततो द्वारदेशे कलशे यममावाह्य नमस्कृत्य यमाय सोममिति कृष्णध्वजपताकालंभः यमाय मधुमत्तमम्मि।

भयभीतेन अयंयज्ञःसुभक्तितः आरब्धस्त्वत्प्रसादेननिर्विघ्नंमेभवत्विति आचार्यंप्रार्थ्यसंतूर्यघोषंसपरिकरः
संपूर्णकुंभोभद्रंकर्णेभिरितिमंत्रेणमहामंडपंप्रदक्षिणीकृत्यपश्चिमद्वारेणप्रविशेत् तत्राचार्यः अपक्रामंतु
भूतानिपिशाचाःसर्वतोदिशं सर्वेषामविरोधेनब्रह्मकर्मसमारभ इत्युक्त्वातत्रसर्षपान्विकीर्य देवाआयां
तुयातुधानाअपयांतुविष्णोदेवयजनंरक्षस्वेतिरक्षांकृत्वा वेदिकाग्नेयकोणेस्थूणांवसुदायैनमः वसुदा
मावाहयामीत्यालभ्यगंधपुष्पादिनार्चयेत् ततःप्रादक्षिण्येनभद्रायैनमइतिद्वितीयां अदित्यैनमइतितृती
यां नंदायैनमइतिचतुर्थी मंडपाग्नेयकोणेभूत्यै० इतिप्रथमां ततःप्रादक्षिण्येन० सरस्वत्यै० पूर्वसंध्यायै
मध्यसंध्यायै० पश्चिमसंध्यायै० गायत्र्यै० सावित्र्यै० बृहस्पत्यै० अदित्यै० वितत्तायै० पौर्णमास्यै० सिनीवाल्यै
१२ इतिषोडशस्थूणाःस्पृष्ट्वापूजयेत् नागमात्रेनम इतिबलिःकार्यःसर्पेभ्योनमइतिशाखोद्वंधनानिपूजये
त् ततःपश्चिमद्वारेणनिर्गत्यपूर्वदिगादिद्वारतोरणपूजामारभेत् तत्रप्राच्यांसुदृढतोरणाय० आम्रस्यतोर
णेनेयज्ञंरक्षसर्वविघ्नान्निवारयेतिपूजयेत् अथत्रिशूलशृंगेषुप्रादक्षिण्येनेंद्रंधातारंभगमित्यादिसन्यासंकु

कलशे ४ आनोनिसुद्भिरिति पू॰ १ तत्वायामीति १

प्र॰म॰ ५ ताकालंभः उदुत्तमंवरुणेति तोरणोपरिनिधानं नैवनीतोदनबलिदानं अग्नआयाहीतिसामवेदंपूजयेत् साम
वेदस्तुपिंगाक्षोजागतःशक्रदैवतः भारद्वाजस्तुविप्रेंद्रऋत्विक्त्वंमेमखेभवेति सामवेदध्यानं तत्रजपः॥
इन्द्रायसामगायत अहमस्मिप्रथमजाऋतस्यास्वादिष्ठया गायंतित्वागाय॰ कस्यनूनंकतमस्यामृतानामिस्या
दि अथवायव्ये वायवेनमइतिवायुमावाह्यपूजयेत् वायोशतमिति धूम्रध्वजपताकालंभः तववायवृतस्पतइ
तिपताकोच्छ्रयणम् वायुंसंपूज्ययवोदनबलिदानं॥अथोत्तरे सुभ्रमत्तोरणायनमः न्यग्रोधतोरणेनंयत्तंरक्षस
र्वविघ्नान्निवारयेति पूजयेत् त्रिशूलशृंगेषु त्वष्ट्रेनमःसवित्रे॰ विष्णवेनमःइत्यादिन्यासः द्वारशाखयोःप्रसू
षायनमःप्रभासायनमः इतिवसुद्वयमर्चयेत् शाखामूलस्थयोर्धान्यराश्योर्धनदश्रीमदनामानौकुंभौप्रतिष्ठा
प्यपूजयेत् अत्रसोममावाह्यनमस्कृत्यसोमोधेनुमितिसुवर्णवर्णध्वजपताकालंभः वयंसोमेतितोरणोपरिनि
धानं आप्यायस्वेति हैयंगवबलिदानं शन्नोदेवीरित्यथर्ववेदंपूजयेत् सुवर्णनयनोथर्वानुष्टुप्छंदःपुरंदरःदे
वोदैतानगोत्रस्तूऋत्विक्त्वंमेमखेभवेतितद्ध्यानं तत्र अथर्वांगिरसंचैव अथर्वशिरसंतथा शांत्यध्यायंचपठे साम॰ ५

३ द्वारदेशेकलशे ३



S

त्ति तोरणोपरि निधानं· यमायसोममिति माषभक्तबलिदानं· इषेत्त्वेति यजुर्वेदं पूजयेत् कातरास्तोमयजुर्वेदस्यै
ष्टुभोविष्णुर्देवतः काश्यपेयस्त्वविप्रेंद्रऋत्विकृत्त्वंमेमखेभवेति यजुर्वेद ध्यानं तत्र आनोभद्रानुवाकस्य आ
सुःशिशानकस्तथा यद्देवास्त्रीणिचपठेत्ततोष्टौचपुनंतुमां अभिधाअसिस्थैवदीघोक्तेऋचंपठेत् आप्या
यस्वषट् नमोस्तुसर्पेभ्यः आकृष्णेन नमःशंभवेइत्येकां एकाग्निर्देवताकमात् त्रातारमिंद्रमित्येकांसोमंरा
ज्ञानमेकया अन्नपतेमह्यां इंद्रऋचंवाचंसमग्रकंपठेत् अथनिर्ऋतौ कलशेनिर्ऋतयेनमइति निर्ऋतिमा
वाह्य पूजयेत् मोषुणःपरापरे तिकृष्णध्वजपताकालंभः असुन्वंतमिति ध्वजपताकोच्छ्रयणं निर्ऋतिंसं
पूज्य मोषुणइतिकृष्णत्रीह्यन्नंघृतसहितंबलिंदद्यात् अथपश्चिमायां सुभीमत्तोरणायनमः द्वास्तोरणे
नंयत्त्रंरक्षसर्वविघ्नान्निवारयेति पूजयेत् अथत्रिमूलश्रृंगेषु अर्यम्णेनमः अंशवेनमः विवस्वतेनमः इत्या
दिसन्यासः द्वारशाखयोः अनिलायनमः अनलायनमः इतिवसुद्वयमर्चयेत् शाखामूलयोर्धान्यपुंज
योःसंजीवनामृतनामानौकुंभौप्रतिष्ठाप्यपूजयेत् तत्रवरुणमावाह्यनमस्कृत्यतत्त्वायामीतिश्वेतध्वजप

१ द्वारदेशेकलशे १

१उदुंबरः

ताभ्योबलिंदत्वाकुंडेषुस्वस्वशाखीयपूर्वोगोत्तरंहोतारः प्रतिदैवतमष्टोत्तरशतमष्टाविंशतिमष्टौवाप्रत्येकंस।
मित्तिलाज्यैः कुंडसंख्ययाविभज्यजुहुयुर्नाममंत्रैः ततः वास्तोष्पतेप्रतिजानीहीतिमंत्रचतुष्टयेनसमित्तिलाज्यैः
प्रतिद्रव्यमष्टोत्तरशतंपूर्ववद्धुत्वा ततःपंचसंख्ययापंचविंशतिसंख्ययावाविल्वैस्तद्बीजैर्वावास्तोष्पतइति
चतसृभिर्वास्तोष्पतेध्रुवास्थूणामितिचहुत्वा अघोरेभ्योथघोरेभ्यइत्याज्येनाष्टोत्तरसहस्रमष्टोत्तरशतंवावा
स्तुमर्मसंधानायजुहुयुः ततोरक्षोघ्नपावमानसूक्ताभ्यांत्रिसूत्र्याप्रासादंसंवेष्ट्यपरितोजलदुग्धयोः पृथग
विच्छिन्नधारेदत्वापीठेपूजितांहैमींवास्तुप्रतिमांदधिदूर्वासप्तधान्यप्रवालगंधाक्षतपुष्पयुतेऽपक्वमृद्भां
डेसंस्थाप्यतत्पिधायचतुःषष्टिधाभाजितप्रासादाग्नेयकोणेपदादुत्तरेआकाशपदेजानुमात्रंगर्तंकृत्वाजलेना
पूर्यगंधपुष्पाणिप्रक्षिप्यमृद्भांडंतत्रनिधायगर्तंतन्मृदैवपूरयेत् मृदश्चाधिक्यंपरंशुभं इत्थंवास्तुपूजांकृत्वागु
रुर्मंडपेशानभागेवेद्यांगृहानधिदेवताःप्रत्यधिदेवताविनायकादीन्पंचलोकपालांश्चदानवपूर्वोक्तप्रकारे
णावाह्यपूजयेत् ततःऋत्विजःसमिच्चर्वाज्यैः अष्टोत्तरसहस्राष्टोत्तरशताष्टाविंशत्यष्टान्यतमसंख्ययाकुंडे

त् अथैशान्यां ईशानायनम इतीशानमावाह्य पूजयेत् नमः शंभवायेति रक्तध्वजपताकालंभः तमीशानमि
त्युच्छ्रयः कद्रुद्रायेति गाव्येधुक बलिः ईशानपूर्वयोर्मध्ये कलशे अनंतायनम इत्यनंतमावाह्य पूजयेत्
नमोस्तु सर्पेभ्य इति मेघवर्णध्वजपताकालंभः तद्विष्णोरित्युच्छ्रयः विष्णोर्नुकमिति बलिदानं पश्चिमनि
र्ऋतिमध्ये कलशे ब्रह्मणे नम इत्यावाह्य पूजयेत् यद्देवादेवहेडनमिति रक्तध्वजपताकालंभः ब्रह्मजज्ञान
मित्युच्छ्रयः सनोभुवनस्यपत इति पायसबलिदानं प्राच्यां गणानां त्वेति गणेशं संपूज्य नमोस्तु रुद्रेभ्यो येए
थिव्यां येंतरिक्ष इति मंडपाद्बहिर्दिग्विदिक्षु रुद्रान्संस्थाप्य तेभ्यो बलिं दद्यात् येकेचित्विह लोकेषु आग
ता बलिकांक्षिणः तेभ्यो बलिं प्रयच्छामि नमः स्कत्यपुनःपुन रितीशान्यां सर्पेभ्यो भूतेभ्यो नम इति बलिं दत्वा
ऽऽचामेत् इति मंडपपूजा अथ गुरुर्महावेद्यां सर्वतोभद्रदेवतास्थानम पूर्वोक्तसामान्यप्रयोगोक्ता आवाह्य
संपूज्य स्वस्वकुंडेग्निं स्थापयेत् ततः सर्वेपि होतारस्तमेवाग्निं स्वस्वकुंडे प्रणयेयुः ततो गुरुः प्रासादांतरीशान्यां
नैर्ऋत्यां वा हस्तमित वेद्यां चतुःषष्टिपदे वास्तुपीठे सामान्यप्रयोगोक्ताः शिख्यादिदेवता आवाह्य संपूज्य



१ ईशान्यां कलशं सं० = १

प्र॰म॰
७

एकस्मिन्पंचामृतं पंचसुजलं एकस्मिन्सुगंधिजलं एकस्मिन्पंचपल्लवकषायः एकस्मिन्सर्वौषधयः द्रुक्षा।
मातुलुंगैः फलैः सौवर्णजलेन गोशृंगोदकेन धान्यैः सहस्रछिद्रैः सर्वौषधिभिः पंचपल्लवैस्तीर्थोदकैर्नवरत्नैर्यु
तांकार्याः अवशिष्टेषु दशसु कलशेषु कदंबशाल्मलीजंबूअशोकप्लक्षचूतवटबिल्वनागकेसरपलाशपल्लवान्।
क्रमेण निक्षिप्य सुद्धजलमापूर्य लोकपालानावाहयेत् सर्वेषां कलशेषु सिसनेनस्याप्याः सूक्ष्मवस्त्रं सुगंधितैलं
यवशालिगोधूममसूरिकाबिल्वचूर्णमुद्वर्तनार्थं आमलकचूर्णं सुगंधियक्षकर्दमं जटामांसींचासादयेत् तत्र
चतुरंगमंगलकलशानेकं वास्थापयेत् तदंतेतीर्थोदककलशे सर्वेसमुद्राः सरितस्तीर्थानि जलदानदाः आयां
तु यजमानस्य दुरितक्षयकारकाः इत्यादितीर्थान्यावाहयेत् ततः स यजमान आचार्यो मूर्तिस्थपतिभ्यां सहसुमं
गलघोषं कर्मकुटीं गत्वा भूमावुपलिप्य विधिवदग्निं स्थापयित्वा प्रतिमानिर्माणे प्राणिवधादिदोषनिरासार्थं घृ
तेन तिलैर्वा होमं करिष्ये इतिसंकल्प्याऽऽज्यभागांतं हुत्वा देवमंत्रेणाज्याहुतिशतद्वयं हुत्वापूर्णाहुतिंचकृत्वा प्र
तिमां कुशैः संमार्ज्य मधुघृताभ्यंगेन देहस्य व्रणभंगं कृत्वा संपूज्य पंचगव्येन पृथक्पृथक् स्नापयित्वा पुनः संपू

राम
७

षुविभज्य हुत्वा विश्वकर्मन्निस्याज्येन हुत्वा बलीन्दत्वा पूर्णाहुतिं जुहुयुः एतन्मंत्रप्रकारादिकं दानमयूखे सामान्यप्रयोगे उक्तं अथ गुरुः स्नानमंडपे ॐ नमो नारायणायेत्यभिमंत्रितेन पंचगव्येन भूमिं वेदिकां त्रयं च संप्रोक्ष्य तत्र दक्षिणवेदिकायामास्तृत वालुकायाम क्षतैः स्वस्तिकं लिखित्वा तत्र विश्वकर्मणा वाध्यानं विश्वकर्मा तु कर्तव्यः श्मश्रुलो मांसलाधरः संदंशपाणि र्द्विभुजस्तेजो मूर्तिः प्रतापवान् इति ध्यात्वा सप्तधान्योपरि भद्रपीठं निधाय वेदिकायाः पश्चाद्वारि पूर्णान्सपल्लवान् षट्कलशान्मत्स्यपल्लव वट क्षीयक षाय गोमूत्र गोमय भस्म गंधोदकैः प्रपूर्यावरान् पंचगंधजलेनापूर्योदकं तस्य पंक्ति रूपेणासादयेत् तत्रांत्यस्य पतिकलशः भद्रपीठयुत मध्यमवेदि पश्चिमे प्येवं स्यपतिकलशातिरिक्ता एकादश भद्रपीठयुतोत्तरवेद्यास्तु परितोष्टौ कलशान्पूर्वादि क्रमेण क्षारोदक क्षीर दधि सर्पिः इक्षुरस सुरास्वादूदकगर्भोदकयुतान् हिरण्यगर्भाद्यैरष्टभिर्मंत्रैर्विन्यसेत् ॥ ततो म्यै च वेद्याः पश्चिमभागे। मृत्तिका· गोमय· गोमूत्र· भस्म· मिलितपंचगव्य· क्षीर· दधि· घृत· मधु· शर्करा· युताः दशकलशाः पंचदशशुद्धजलकलशाः अथान्यानेकत्रिंशत्कलशानासादयेत् तत्र द्वयोः शुद्धजलं·

१· हिरण्यगर्भः सम· १ यः प्राणतो नि· २ ब्रह्मजज्ञानं। सबुध्निया· ३ मही द्यौः पृ· ४ उपश्वासय पृथिव्यै· ५ अग्ने नय सुपथा राये अस्मान्· ६ या ते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मात्मानं। अच्छा वसूनि कृण्वन्नस्मे नर्या पुरूणि। यज्ञो भूत्वा यज्ञमासीद स्वां योनिं। जातवेदो भुव आजायमानः सक्षय एहि ७

॥ दीपक·पंक्ति·३·कौ·०॥ ८

सिनीतथा वसिष्टाचअपापा चसिंधुवस्यारुणीतथा ताम्राचैवत्रिसंध्याचतथामंदाकिनीपरा तैलकाह्नीच।
पाराचदुंदुभीनकुलीतथा नीलगंधाचबोधाचपूर्णचंद्राशशिप्रभा श्रमरेशंप्रभासंचनैमिषंपुष्करंतथा श्राषा
ढिंडिंडिभारत्तंभारभूतंबलाकुलं हरिश्चंद्रंपरंगुह्यंगुह्यंमध्यमकेश्वरं श्रीपर्वतंसमाख्यातंजलेश्वरमतःपरं
श्राम्रातकेश्वरंचैवमहाकालंतथैवच केदारमुत्तमंगुह्यंमहाभैरवमेवच गयांचैवकुरुक्षेत्रंगुह्यंकनखलं
तथा विमलंचंद्रहासंचमाहेंद्रंभीममष्टकं वस्त्रादंरुद्रकोटीचअविमुक्तंमहालयं गोकर्णंभद्रकर्णंचम
हेशस्थानमुत्तमं छागलाद्वंद्विरंडंचककोटंमंडलेश्वरं कालंजरवनंचैवदेवदारुवनंतथा शंकुकर्णंतथै
वेहस्थलेश्वरमतःपरं एतानचाष्टतीर्थानिगुह्यक्षेत्राणिसर्वशः तानिसर्वाणिकुंभेस्मिन्विशंतुब्रह्मशास
नादितिमंत्रेणतत्रतीर्थान्यावाह्य देवंस्नपयेत् यजमानश्चाशिल्पिवर्गंयथाशक्तिपूजयेत् ततोगुरुर्बहिर्नि
र्गत्यसिद्धार्थघृतपायसैस्त्र्यंबकमितिमागादिदिक्षुवलिंदत्वाचम्य देवसमीपमागत्यत्रातारमिंद्रमित्या
दिदशलोकपालमंत्रैर्मंडपांतर्दिक्षुरक्षांकृत्वा देवस्याग्रेचतुरोब्राह्मणानुपवेश्यस्वस्तिवाचयित्वा ते

ज्यशिल्पीपूर्वकल्पितंकलशंसरत्नंसहिरण्यंसवस्त्रंदेवपुरतोनिधाय मृदागोमयेनगोमूत्रेणभस्मनाक्षीरेणेतित्रि
विक्रमः जलांतरितेनस्नापयित्वा पुनःसंपूज्यशंखनादेनरथादिनादेवंमहामंडपप्रादक्षिण्येनस्नानमंडप
मानयेत् तत्रगुरुर्दक्षिणवेद्यांभद्रंकर्णेभिरितिप्राङ्मुखंदेवंभद्रासनेनिवेश्यपूर्वकल्पितपट्कलशेषंतंस्य
पतिकलशंहिरण्यादिसहितंदेवसमीपेनिधाय काशीकुशस्थलीमायावंत्ययोध्यामधोःपुरी शालग्रामंसगो
कर्णनर्मदाचसरस्वती तीर्थान्येतानिकुंभेस्मिन्विशंतुब्रह्मशासनात् झषारूढासरोजाक्षीपद्महस्ताशशि
प्रभा आगच्छतुसरिज्ज्येष्ठागंगापापप्रणाशिनी नीलोत्पलदलश्यामापद्महस्तांबुजेक्षणा आपातुय
मुनादेवीकूर्मयानस्थितासदा प्राचीसरस्वतीपुण्यापयोष्णीगौतमीतथा ऊर्मिलाचंद्रभागाचशरयूर्गंडकी
तथा जंबूकाचशतद्रूश्चकलिंगासुप्रभातथा वितस्ताचविपाशाचशर्मदाचपुनःपुना गोदावरीमहावर्त्ता
शर्करावर्तमार्जनी कावेरीकौशिकीचैववत्रतीयाचमहानदी विटंकाप्रतिकूलाचसोमनंदाचविस्तुला करतो
यावेत्रवतीदेविकावेणुकाचया आत्रेयगंगावैतरणीकाश्मीरीह्लादिनीचया ऋावतीचशतद्रासाकल्माषाशं

पंचदशसुद्धजलकलशांतर्गतैः ६ ॥=७ मृदादिदशकलशांतर्गताद्य कलशेन =७॥ पंचदशशुद्धोदककलशांतर्गतेन षष्ठेन अत्र सर्वत्र सुद्धज
वरुणस्योत्तंभनमसि वरुणस्यस्कंभसर्जनीस्थो वरुणस्यऋतसदन्यसि ३ लस्नानं सप्तादिक्रमेणज्ञेयम् ॥ ७ ॥ = = = ॥
वरुणस्यऋतसदनमसि वरुणस्यऋतसदनमासीद = ३ = ३ ३

प्र.म. ६

तु यजमानः सुवर्णशलाकास्नानवस्त्रादिकं च शिल्पिने दत्त्वा सहिरण्यां गां गुरवे दद्यात् गुरुरुत्तरसांवेद्यां भद्रा
सनेभद्रमितिदेवं स्थापयित्वा कलशेन समुद्रज्येष्ठा इति संस्नाप्य संपूज्य दूर्वास्तत्तान्मूर्ध्नि दत्त्वा प्रार्थयेत् नम
स्तेदेवेसुरेशानि प्रवृत्ते विश्वकर्मणः प्रभाविताशेषजगद्धात्रि तुभ्यं नमो नमः त्वयि संपूजयामीशं नारायणमना
मयं हरित्वाशेषदोषैस्त्वं ऋद्धियुक्ता सदा भवेति ततो देवस्य दक्षिणहस्ते प्रतिमावित्तस्त्रिमात्रमूर्णासूत्रं क
निकृद्दिति मंत्रेण बध्नीयात् सर्वसत्त्वमयं शांतं परब्रह्म सनातनं त्वामेवालंकरिष्यामि त्वं वंद्यो भव ते नमः
इति पठित्वा चतुर्भिः कलशैः स्नापयेत् इदमापः प्रवहतेत्याद्येन आपो देवीरिति द्वितीयेन इमं मे गंग इति तृ
तीयेन तत्त्वायामीति चतुर्थेन अग्निर्मूर्धा दिवस्पत्यलमृत्तिकाकलशेन समुद्रज्येष्ठा इति शुद्धोदककलशे
न गंधद्वारामिति सप्तपलमितगोमयकलशेन वरुणस्योत्तंभनमसीति शुद्धोदकेन तत्सवितुरिति द्वादशप
लगोमूत्रकलशेन आपो हिष्ठेति शुद्धोदकेन प्रसद्येति मुष्टिसंमितभस्मकलशोदकेन यो वः शिवतमो इति।
शुद्धोदकेन पयः पृथिव्यामिति त्रिपलसंमितपंचगव्यकलशेन देवीरापः संमधुमतीर्मधुमतीभिः सृज्यध्वं इति

२पंचदशां तर्गतेन२

राम. ६

७

पयः पृथिव्यां पय ओषधीषु पयो दिव्यंतरिक्षे ३ प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने ६ आपो देवीः प्रतिगृह्णीत भस्मैतत्स्योने कृणुध्वं सुरभाउलो
पयोधाः पयस्वतीः प्रदिशः सन्तु मह्यम् १ = ३ संसृज्य मातृभिष्ट्वं ज्योतिष्मान्पुनरासदः २ तस्मै नमन्तां जनयः सुपत्नीर्मातेव पुत्रं बिभृताप्स्वेनत् = ५

वाचेति १ = २ विष्णोरराटमसि वि ष्णोः ——— :श्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसिवै
१ ष्णवमसिविष्णवेत्वा॥

ष्यमूर्द्दक्षिणांदत्वाशिषोगृहीत्वागुरुर्देवंस्नपयेत् अग्निर्मूर्धेतिमृदा यत्रापञ्चावदृतिकषायैः गायत्र्या
गोमूत्रेण गंधद्वारामितिगोमयेन मानस्तोकइतिभस्मना तत्सवितुरितिगंधतोयेन ततःपंचकलशैःपंच
देवस्यैःनमःशंभवेइतिप्रथमेन हंसःशुचिषदितिद्वितीयेन यातेरुद्रेतितृतीयेन विष्णोरराटमसीतिचतु
र्थेन ब्रह्मजज्ञानमितिपंचमेनसंस्नाप्य शतंजीवशरदोवर्द्धमानइतिदूर्वासतपुष्पैःसंपूज्यवस्त्रेणाच्छाद्य
द्वितीयवेद्यांभद्रंकर्णेभिरितिभद्रासनंविधायास्तीर्णंबर्हिस्स्रुपनोयाहिवीतयइतिप्रागग्रान्कुशानास्तीर्यतत्र
प्रणवेनदेवंनिधायप्राङ्मुखोभूत्वाकुंकुमाक्तेनसूत्रेणलिंगमावेष्ट्यप्रतिमायांमुखेलिंगस्यचनेत्राणिसुव
र्णशलाकयाचित्रंदेवानामितिसर्धचैनकल्पयेत् ऊर्ध्वाधःपृथग्भूतंपक्ष्मपुटद्वयंच आकृष्णेनेतिकल्पये
त् नेत्रमध्येत्रिभागेनकनीनिकामपिकल्पयेत तदानकश्चित्पुरतस्तिष्ठेत सुवर्णपायसंभक्ष्यंभोज्यमादर्शं
चशीघ्रंदर्शयेत् ततःशिल्पीलोहेनोल्लिखेत् गुरुर्मधुसर्पिभ्याममभ्यज्येमंमेगंगइतिमंत्रेणाभ्युक्ष्यपुनर्मृदाद्ये
कादशकलशैःस्नापयेत् प्रतिमाबहुत्वेमृदादिकलशोदकंकिंचित्स्थापयित्वातासांनेत्रेपूर्वोल्लिखतेनस्नपये

१ पूर्वोक्तमंत्रैः १

हविष्मतीरिमाआपोहविष्मानेनोअध्वरः॥हविष्माँ ऽऽ = १ ॥ धान्यमसिधिनुहिदेवान्प्राणायत्वापानायत्वाव्यानायत्वा॥दीर्घामनुप्रसितिमायुषे
आविवासतिहविष्माँ असुसूर्यः ॥ १ = ॥ १ ॥ऽऽ धादेवोवः सविताहिरण्यपाणिःप्रतिगृण्हातु ॥७॥ टी·पं· १ की॥ ७ ॥
= देवंबर्हिःसरस्वती सुदेवमिंद्रेअश्विना॥तेजोनचक्षुरक्ष्योःर्वर्हिषादधुरिंद्रियं।वसुवनेवसुधेयस्यव्यंतुयज॥ = ५ टी·पं·५ की० = ० ॥

लकलशोदकेन हिरण्यगर्भइतिसुवर्णोदकेन हविष्मतीरितिशृंगोदकेन धान्यमसीतिधान्योदकेन सहस्राक्षे
त्तिसहस्रधारकलशेन यादिव्याइतिसर्वौषधिजलेन नमोस्तुसर्पेभ्यइतिपंचपल्लवोदकेन अश्वत्थव्यल्क
कुभःपृथिव्याइतिरत्नोदकेन इमंमेगंगेइतितीर्थोदकेन पुनरष्टभिःकलशैःपूर्वकल्पितैःसमुद्रसंज्ञितैःस्न
पयेत् कयानश्चित्रइतिक्षारोदकेन आप्यायस्वसमेत्वितिक्षीरकुंभेन दधिक्राव्णइतिदध्नः घृतवतीभुवनाना
मितिघृतस्य पयःपृथिव्यामितीक्षुरसस्य देवंबर्हिरितिसुरोदकस्य स्वादिष्ठयेतिस्वादूदकस्य सरस्वतीयोन्या
मितिगर्भोदकस्य पुनर्दशभिःपल्लवैर्लोकपालकलशैःस्नापयेत् त्रातारमिंद्रमितिकदंबपल्लवकुंभोदकेन
त्वन्नोअग्नेवरुणस्यविद्वानितिशाल्मलीपल्लवेन सुगंनःपंथामभयंकृणोत्वितिजंबूपल्लवेन असुन्वंतमय
जमानमिति अशोकपल्लवेन तत्वायामीतिप्लक्षेण वायोयेतेसहस्रिणइतिचूतपल्लवेन वषट्तेमेतिवटपल्लवेन।
तमीशानमितिविल्वपत्रेण नमोस्तुसर्पेभ्यइतिनागकेसरपल्लवेन ब्रह्मजज्ञानमितिपलाशपल्लवेन ततःसुमंगल
घोषैः कनिक्रदितिचतुर्भिःकुंभैःएकेनवाकुंभेनदेवंस्नापयित्वा सुगंधिनासितवस्त्रेणपरिमृज्यविश्वतश्चक्षुरिति

सरस्वतीयोन्यांगर्भमंतरश्विभ्यांपत्नीसुकृतंबिभर्ति।अपांरसेनवरुणोनसाम्नाइंद्रंश्रियेजनयन्नप्सुराजा ॥ = टी·पं· ६ की० १ = ॥
सुगंनःपंथामभयंकृणोतुयस्मिन्नक्षत्रेयमएति ... ॥ = टी·पं· ५ की० २ = ॥
॥ असुन्वंतमयजमानमिच्छस्तेनस्येत्यांतस्करस्यान्वेषि॥अन्यमस्मदिच्छसातइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु॥ = टी·पं·५ की० ३ = ॥

युंजानःप्रथमंमनस्तत्वायसविताधियः ॥= द्रुपदादिवमुमुचानःस्विन्नःस्नातोमलादिव ॥४
अग्निंज्योतिर्निचाय्यपृथिव्याअध्याभरत् २ ॥= पूतंपवित्रेणेवाज्यमापःशुंधंतुमैनसः॥ ४ ॥=

शुद्धोदकेन आप्यायस्वेति षोडशपलक्षीरकुंभेन तस्माअंगमामवद्वितिशुद्धोदकेन दधिक्राव्णइति विंशतिप लदधिकुंभेन युंजानइत्युदकुंभेन घृतवतीभुवनानामितिसप्तपलघृतकुंभेन देवस्यत्वेतिजलेन मधुवाताइति त्रिपलमधुकुंभेन आपोअस्मान्निति जलेन आयंगौरितित्रिपलशर्कराकुंभेन आपोहयद्बृहतीरित्युदकेन प्रक्षा ल्य यज्ञायज्ञावइतिवस्त्रेणसंमार्ज्य सुगंधतैलेनाभ्यज्य द्रुपदादिवेति यवशालिगोधूममसूरविल्वचूर्णैरु द्वर्त्य यातेरुद्रशिवातनूरिति आमलकचूर्णेन यक्षकर्दमेनकर्दमेनप्रजाभूतेतिलिंपेत् यक्षकर्दमस्तु कस्तूरि कायाद्वौभागौद्वौभागौकुंकुमस्यच ॥ चंदनस्यत्रयोभागाःशशिनस्त्वेकएवहीत्युक्तः ततोजटामास्यानुलि प्य मानस्तोके प्रतद्विष्णुरिति कलशद्वयेनस्नापयित्वा अपामसोमममृताअभूमेति पंचामृतेन अयंराजावरुणो नुमन्यतां १ यथेतिसंतेपयांसि० ३ आप्यायस्वमिदंतमसोम० ४ अप्स्वग्नेसधिष्टवसौ० ५ इतिपंचभिः शुद्धजलपूरितकलशैःक्षालयेत् गंधद्वारामितिगंधोदकेन यज्ञायज्ञावइतिपंचपल्लवकषायकलशोदकेन याओषधीःपूर्वाजाताइत्योषधीकलशेन ओषधीःप्रतिमोदध्वमिति पुष्पकलशोदकेन याःफलिनीरित्यष्टफ यथाविमस्यमनुषो० ॥ अयंमंत्रःपुस्तकांतरेदृष्टः ॥ ३ ॥ शुद्धजलपूर्ण ४ ॥ ॥

जयेत् ततः शय्यायां देवं स्थापयित्वा त्रिभिर्वस्त्रैर्देवमाच्छाद्य देवस्य शिरोदेशभूमौ सहिरण्यं निद्राकलशमयो
देवीरूपहूयद्दिति प्रतिष्ठाप्य आप्यायस्वसमेतिमधुसर्पिर्भ्यां देवमभ्यज्य यातेरुद्रेतितैल. सर्षपै रुपलिप्य गंधादि
नाभ्यर्च्य । बृहस्पतेपरिदीयेति सितंप्रतिसरंदद्यात् अत्रवाबृहस्पतेपरीतिमंत्रेणदेवस्य कंकणबंधनमित्येके ॥
ततोदेवस्यपादनाभिवक्षःशिरःसुविश्वतश्चक्षुरित्यालंभनं ॥ ततस्तद्दक्षिणपार्श्वेछत्रंव्यजनंचामरंचचरण
देशेपादुके पार्श्वयोःशांतिकुंभौ आसनदर्पणघंटाभक्ष्यभोज्यजलपात्रादिकंचदेवस्यपुरतःस्थापयेत् त
तोभस्मदर्भतिलै देवस्यपरितोरक्षार्थंप्राकारत्रयंकृत्वा मंडपाद्बहिर्गत्वा प्रतिदेशंलोकपालेभ्योगंधादिपूर्व
कंबलिंदद्यात् भूतेभ्यश्चत्र्यंबकमिति बलिमंत्रस्तु पूर्वदिग्वासिभ्योदिक्पतिदिग्भूताधिपतिदिग्रुद्रदिङ्
मातृदिक्क्षेत्रपालेभ्योनमः इत्येवंप्रतिदिशं तत आचम्यहोमंकुर्यात् तद्यथा ॐपरायविष्णवात्मनेस्वाहेति
विष्णवे अन्यदेवतायांशिवात्मनेइत्याद्यूहः अनेनाष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिमष्टौवातिलैर्यवैर्वा ॥
प्रत्येकंहुत्वाप्रतिमायांन्यासान्कुर्यात् अ पादयोः उ हृदये म ललाटे इतिप्रणवंन्यसेत् भूःपादयोः भुवःहृदये

वेदाहमेतं पुरुषं महांतं ॥ आदित्यवर्णं तमसः परस्तात् ॥ ॥ तमेवं विद्वानमृत इह भवति ॥ नान्यः पंथा विद्यतेयनाय ॥३॥

धूरसि धूर्व धूर्वंतं धूर्व तं योस्मान्धूर्वति तं धूर्व यं वयं धूर्वामस्त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवहूतमम् ॥ अहृतमसि हविर्धानं दृंहस्व = ॥

संकलीकृत्य देवमावाहयेत् एह्येहि भगवन्विष्णो लोकानुग्रहकाम्यया यज्ञभागं गृहाणेमं वासुदेव नमोस्तु ते हिरण्यवर्णा इति पाद्यं हिरण्यवर्णाः शुचय इत्यर्घ्यं विभ्राड्बृहत्पिबत्वित्याचमनीयं त्र्यंबकमिति चंदनं अभिवस्त्रेति वस्त्रं वेदाहमेतं पुरुषमिति सुपवीतं तेनैव उत्तरीयं च इदं विष्णुरिति पुष्पं धूरसि धूर्वेति धूपं चंद्रमा मनस इति दीपं अन्नपतेन्नस्येति नैवेद्यं आचमनं पुष्पांजलिं दत्वा प्रार्थनां कृत्वा स्नानवस्त्रनैवेद्यादिकं शिल्पिने दद्यात् इति देवस्नपनविधिः ॥ अथ देवं पुरुषसूक्तेन स्तुत्वा उत्तिष्ठोत्तिष्ठ गोविंद त्यज निद्रां जगत्पते त्वयि सुप्ते जगत्सुप्तमुत्थिते चोत्थितं जगत् ॥ इति तमुत्थाप्य रथमारोप्य मंगलघोषेण ॥ कनिक्रददिति सूक्तेन च प्रासादं प्रादक्षिणेनानीय यागमंडपपश्चिमद्वारे यांकृष्णेनेति मंत्रेण प्रवेश्य वेद्याः पश्चिमभागे प्राङ्मुखमुपवेश्य मधुपर्कं कुर्यात् ततो वेद्यां कुशानास्तीर्य तदुपरि शय्यामास्तीर्य वेद्याः पूर्वादिदिक्षु विष्णुमधुसूदनत्रिविक्रमवामनानाग्नेयादिकोणेषु श्रीधरहृषीकेशपद्मनाभदामोदरांश्च पूजयेत् ॐ नमो नारायणायेति मंत्रेण विष्णुं शय्यायां निवेशयेत् शिवादिप्रतिष्ठायां तु नमः शंभवायेति शय्यायां निवेश्य भवं शर्वमीशानं पशुपतिं रुद्रमुग्रं भीमं महांतं च पूर्वादिक्रमात्पू

॥ ॥ नमः शंभवाय च मयोभवाय च नमः शंकराय च मयस्कराय च नमः शिवाय च शिवतराय च ॥ ॥१०॥ ॥

दाभ्यो॰ दक्षिणोरौ उत्तराभाद्रपदाभ्यो॰ वामोरौ रेवतीभ्यो॰ दक्षिणजंघायां अश्विनीभ्यो॰ वामजंघायां भरणी
भ्यो॰ दक्षिणपादे कृत्तिकाभ्यो॰ वामपादे ध्रुवाय॰ नाभ्यां सप्तर्षिभ्यो॰ कंठे मातृमंडलाय॰ कटिदेशे विष्णुपदेभ्यो
पादयोः नागवीथ्यै॰ अंगवीथ्यै॰ वनमालायां॰ ताराभ्यो॰ रोमकूपेषु अगस्त्याय॰ कौस्तुभे इतिग्रहादिन्यासः ४
चैत्राय॰ शिरसि वैशाखाय॰ मुखे ज्येष्ठाय॰ हृदये आषाढाय॰ श्रावणाय॰ स्तनयोः भाद्रपदाय॰ उदरे आ
श्विनाय कट्यां कार्तिकाय॰ दक्षिणोरौ मार्गशीर्षाय॰ वामोरौ पौषाय॰ द॰ जंघायां माघाय वा॰ जंघायां ॥
फाल्गुनाय पादयोः संवत्सराय॰ परिवत्सराय इद्वत्सराय अनुवत्सरायनम इतिदक्षिणोर्ध्वात् प्रादक्षिण्येन
चतुर्षु बाहुषु पर्वभ्यो॰ संधिषु ऋतुभ्यो॰ लिंगे अहोरात्रेभ्यो॰ अस्थिषु क्षणाय लवाय काष्ठायै रोमसु कृता
य मुखे त्रेतायै हृदये द्वापराय नितंबे कलये पादयोः मन्वंतरेभ्यो॰ बाह्वोः पराय परार्धाय जंघयोः महाक
ल्पाय शरीरे उत्तरायणाय दक्षिणायनायनमः पादयोः विषुवते॰ सर्वांगुलीषु इतिकालन्यासः ब्राह्मणाय॰ मुखे
क्षत्रियाय बाह्वोः वैश्याय ऊर्वोः शूद्राय पादयोः संकरजेभ्यो पादाग्रे अनुलोमजेभ्यो॰ सर्वांगसंधिषु गोभ्यो

खः ललाटे इतिव्याहृतीर्न्यसेत् अंतालुके आमुखे इंदक्षिणनेत्रे ईंवामनेत्रे उंदक्षिणश्रवणे ऊंवामश्रवणे ऋं दक्षिणगंडे ॠंवामगंडे लृंदक्षिणनासापुटे लॄंवामनासापुटे एंऊर्ध्वदशनेषु ऐंअधोदशनेषु ओंऊर्ध्वौष्ठे औंअ धरोष्ठे अंललाटे अः जिव्हायां यंत्वचि रंचक्षुषोः लंनासिकायां वंदशनेषु शंश्रोत्रयोः षंउदरे संकटिदेशे हं हृदये क्षंनाभ्यां क्षंलिंगे पफबभम दक्षिणबाहौ तथदधन वामबाहौ टठडढण दक्षिणजंघायां चछजझञ वाम जंघायां कखगघङ सर्वांगुलीषु इतिमातृकान्यासः रविचंद्राभ्यांनमो नेत्रयोः भौमाय० हृदये बुधाय० स्कंधे बृहस्पतये० जिह्वायां शुक्राय० लिंगे शनैश्चराय० ललाटे राहवे० पादयोः केतुभ्यो० केशेषु रोहिणीभ्यो० हृदये मृगशिरसे० शिरसि आर्द्रायै० केशेषु पुनर्वसवे० ललाटे पुष्याय० मुखे आश्लेषाभ्यो० नासाभ्यां मघाभ्यो० दं तेषु पूर्वाफाल्गुनीभ्यो० दक्षिणश्रवणे उत्तराफाल्गुनीभ्यो० वामश्रवणे हस्ताय० हस्तयोः चित्रायै० दक्षिणभुजे॥ स्वात्यै० वामभुजे विशाखायां० हृदि अनुराधाभ्यः० स्तनयोः ज्येष्ठाभ्यो० दक्षिणकुक्षौ मूलाय० वामकुक्षौ पू र्वाषाढाभ्यो० कटिपार्श्वयोः उत्तराषाढाभ्यो० लिंगे श्रवण धनिष्ठाभ्यो० वृषणे शतभिषग्भ्यो० नेत्रे पूर्वाभाद्रप

कुक्षौ॰ वरुणाय॰ हस्तयोः मित्राय॰ पादयोः विश्वेभ्योदेवेभ्यो॰ ऊरुमध्ये पितृभ्यो॰ जानुमध्ये यक्षेभ्यो॰ जंघयोः॥
राक्षसेभ्यो॰ गुल्फयोः पिशाचेभ्यो॰ पादयोः असुरेभ्यो॰ पादांगुलीषु विद्याधरेभ्यो॰ पार्ष्ण्योः ग्रहेभ्यः पादतलयोः
गुह्यकेभ्यो॰ गुदे पूतनादिभ्यो॰ नखेषु गंधर्वेभ्यो॰ ओष्ठयोः कार्त्तिकेयाय॰ गणेशाय॰ कटिपार्श्वयोः इतिदेवयो
निन्यासः मत्स्याय॰ मूर्ध्नि कूर्माय॰ पादयोः नृसिंहाय॰ ललाटे वराहाय जंघयोः वामनायमुखे॰ परशुरामाय॰
हृदये रामाय बाहुषु कृष्णाय॰ नाभ्यां॰ बौद्धाय॰ बुद्धौ॰ कल्किने॰ जानुनि॰ केशवाय॰ शिरसि॰ नारायणाय॰ मु
खे॰ माधवाय॰ ग्रीवायां॰ गोविंदा॰ बाह्वोः॰ विष्णवे॰ हृदये॰ मधुसूदनाय॰ पृष्ठे॰ त्रिविक्रमाय॰ कट्यां॰ वाम
नाय॰ जठरे॰ श्रीधराय॰ हृषीकेशाय॰ जंघयोः।पद्मनाभाय॰ गुल्फयोः दामोदराय॰ पादयोः। इतिमूर्त्तिन्यासः॥ ५
अश्वमेधायमूर्ध्नि॰ नरमेधाय॰ ललाटे॰ राजसूयाय॰ मुखे॰ गोसवाय॰ कंठे द्वादशाहाय॰ हृदि अहीनेभ्यो॰ नाभौ
।सर्वजितेभ्यो॰ दक्षिणकट्यां॰ सर्वमेधाय॰ वामकट्यां॰ अग्निष्टोमाय॰ लिंगे॰ अतिरात्राय॰ वृषणयोः आप्तोर्या
माय॰ ऊर्वोः षोडशिने॰ जान्वोः॰ उक्थ्याय॰ दक्षिणजंघायां॰ वाजपेयाय॰ वामजंघायां॰ अत्यग्निष्टोमाय॰ दक्षि

मुखे अजाभ्यो॰ अविकाभ्यो॰ हस्तयोः ग्राम्यपसुभ्यो अरण्यपसुभ्यो॰ ऊर्वोः इतिवर्णन्यासः मेघेभ्यो॰ केशेषु ॥
अभ्रेभ्यो रोमसु नदीभ्यो॰ सर्वगात्रेषु समुद्रेभ्यो॰ कुक्षिदेशे इतितोयन्यासः ऋग्वेदाय॰ शिरसि यजुर्वेदाय॰
दक्षिणभुजे सामवेदाय॰ वामभुजे सर्वोपनिषद्भ्यो हृदये इतिहासपुराणेभ्यो॰ जंघयोः अथर्वांगिरसेभ्यो॰
नाभौ कल्पसूत्रेभ्यो॰ पादयोः व्याकरणाय॰ वक्त्रे तर्केभ्यो॰ कंठे मीमांसायै॰ निरुक्ताय॰ हृदये छंदःशास्त्रे
भ्यो॰ ज्योतिःशास्त्रेभ्यो॰ नेत्रयोः गीतशास्त्रेभ्यो॰ भूतशास्त्रेभ्यो॰ श्रोत्रयोः आयुर्वेदाय॰ दक्षिणभुजे धनुर्वेदा
य॰ वामभुजे योगशास्त्रेभ्यो हृदये नीतिशास्त्रेभ्यो॰ पादयोः वश्यतंत्राय ऊरुयोः इतिविद्यान्यासः दिवे मूर्ध्नि॰
सूर्यलोकाय॰ चंद्रलोकाय॰ नेत्रयोः अनिललोकाय॰ घ्राणे॰ व्योम्ने॰ नाभ्यां॰ समुद्रेभ्यो॰ बस्तिदेशे॰ पृथिव्यै॰
पादयोः इतिवैराजन्यासः हिरण्यगर्भाय॰ शिरसि कृष्णाय॰ केशेषु रुद्राय ललाटे यमाय भ्रूकुट्यां अश्विभ्यां
॰ कर्णयोः वैश्वानराय मुखे मरुद्भ्यो घ्राणे वसुभ्यो॰ कंठे रुद्रेभ्यो॰ दंतेषु सरस्वत्यै॰ जिह्वायां इन्द्राय॰ दक्षिणभु
जे बलये वामभुजे प्रल्हादाय दक्षिणस्तने विश्वकर्मणे॰ वामस्तने॰ नारदाय॰ दक्षिणकुक्षौ॰ अनंतादिभ्यो॰ वाम

प्र.म. १४ =श्रद्५
नेत्रे॰ फट्करयोरस्त्रं॰ दक्षिणवामस्तनयोः श्रीवत्साय॰ उरसि कौस्तुभाय॰ कंठे वनमालायै॰ इत्यंगन्यासः॰ ॐ
पादयोः नजानुनोः मोगुह्ये॰ भनाभ्यां गहृदये वकंठे तेमुखे वानेत्रयोः सुभाले देमूर्ध्नि वादक्षिणपार्श्वे यउत्त
रपार्श्वे॥ इतिद्वादशाक्षरन्यासः॥ प्रतिमायांजीवन्यासः॥ तत्रतेजोभावयित्वाबुद्धींद्रियकर्मेंद्रियमनःप्राणपं
चकाहंकारतन्मात्रादिकंसर्वंसंयोज्यपुरुषभावंभावयित्वासर्वसाक्षिणंचभावयित्वातत्रतत्त्वत्रयंन्यसेत्॥
तद्यथा॰ आत्मतत्त्वाय॰ आत्मतत्त्वाधिपतये ब्रह्मणे नमः पादयोः विद्यातत्त्वाय॰ विद्यातत्त्वाधिपतये विष्ण
वे॰ हृदये शिवतत्त्वाय॰ शिवतत्त्वाधिपतये रुद्राय॰ शिरसीति॰ अथगायत्रीन्यासः सूर्यस्य॰ तपादांगुष्ठयोः
त्सगुल्फयोः विजंघयोः तुजानुनोः वंऊर्वोः रेगुह्ये णिवृषणयोः यंकटिदेशे भनाभौ र्गोजठरे देस्तनयोः
वहृदये स्यकंठे धीवदने मतालुदेशे हिनासिकाग्रे धिचक्षुषोः योभ्रूमध्ये योललाटे नःपूर्वदिशि प्रदक्षि
णदिशि चोपश्चिमदिशि दउत्तरदिशि यामूर्ध्नि तत्सवेत्र तत्सवितुर्हृदये वरेण्यंशिरसि भर्गोदेवस्यशिखा
यां धीमहिकवचे धियोयोनः नेत्रयोः प्रचोदयात् अस्त्रे॥ इतिगायत्रीन्यासः॥ अथमंत्रन्यासः॥ ॐ॥

राम॰ १५

24

बाहौ·चातुर्मास्याय·वामबाहौ·सौत्रामण्यै·हस्तेषु·पश्विष्टिभ्यो·अंगुलीषु·दर्शाय·पौर्णमासाय·नेत्रयोः।सर्वे
ष्टिभ्यो·रोमकूपेषु·स्वाहाकाराय·वषट्काराय·स्तनयोः।पंचमहायज्ञेभ्यो·पादांगुलीषु·आहवनीयाय·मुखे·
दक्षिणाग्नये हृदये॰ गार्हपत्याय·नाभौ·वेद्यै·उदरे॰ प्रवर्ग्याय·भूषणेषु·सवनेभ्यो पादयोः इध्मेभ्यो·बाहुषु॰
दर्भेभ्यो·केशेषु॰।इतिक्रतुन्यासः॥अथमूलमंत्रन्यासः॥आयुधन्यासः॥शक्तिन्यासः॥अंगन्यासः॥इतिसाधा
रणाःसर्वत्र॥वैष्णवमधिकृत्यलक्ष्यंते॥धर्माय·मूर्ध्नि·ज्ञानाय·हृदि·वैराग्याय·गुह्ये॰ ऐश्वर्याय·पादयोः॥
इतिगुणन्यासः॥खड्गाय·शिरसि·शार्ङ्गाय·मस्तके॰ मुसलाय·दक्षिणभुजे·हलाय·वामभुजे·चक्रायनाभ्यां·
जठरे·पृष्ठेच·शंखाय·लिंगे·वृषणेच॥गदायै·जंघयोः जानुनोश्च·पद्माय·गुल्फयोः पादयोश्च·वज्राय·श
क्त्ये।दंडाय·खड्गाय·पाशाय·ध्वजाय·अंकुशाय·त्रिशूलाय·चक्राय·पद्माय·इतिशिवे·इत्यायुधन्यासः
लक्ष्म्यै·ललाटे·सरस्वत्यै·मुखे·रत्यै·गुह्ये·प्रीत्यै·कंठे·कीर्त्यै·दिक्षु·शान्त्यै·हृदि·तुष्ट्यै·जठरे·पुष्ट्यै·सर्वत्र·
॥इतिशक्तिन्यासः॥मूलमंत्रस्य॥ॐ हृदयेनमःशिरसि।भगवतेशिखायां।वासुदेवायकवचंसर्वत्र।वौषट्

संभूतः॰हृदये।वेदाहं॰शिरसि।प्रजापतिः॰शिखायां।योदेवेभ्यः॰कवचं।रुचंब्राह्मनेत्रयोः।श्रीश्चते॰अस्त्रं।।इति
पुरुषसूक्तादिन्यासः।।अथशिवस्यपंचब्रह्मन्यासः अंगुष्ठयोरीशानं॰ तर्जन्योस्तत्पुरुषं।मध्यमयोरघोरं।अनामि
कयोर्वामदेवं॰कनिष्ठिकयोः सद्योजातं।ततः कनिष्ठिकयोर्हृदयं।अनामिकयोः शिरः।मध्यमयोः शिखा।तर्जन्योः
कवचं।अंगुष्ठयोरस्त्रं विन्यस्य।परेणतेजसासंयोज्य कवचेनावगुंठ्य।सर्वकर्मसुनियोजयेत्।आचमनंस
र्वत्रादृस्यंदेवएवकरन्यासंकृत्वा लिंगमुद्रांबध्वा ईशानः सर्व॰ सदाशिवों।। इतिमंत्रेणईशानमुद्दिश्यब्रीयात्।।
ततः अंगुल्यग्रैः रुद्रमुद्रयामूर्ध्नि।तत्पुरुषायविद्महेमहादेवायधीमहि।तन्नोरुद्रः प्रचोदयात्।इति।एवंत
र्जन्यंगुष्ठयोगात्तत्पुरुषं॰मुखे।अघोरेभ्यो॰ इतिमध्यमांगुष्ठयोगेनहृदि।अघोरं॰ वामदेवायनमो॰ मनोन्मनाय
नमइत्यंगुष्ठानामिकयोगेनगुह्ये।सद्योजातं॰भवोद्भवायनमः इतिकनिष्ठांगुष्ठयोगेनपादादारभ्यमस्तकांतं
यावन्मूर्तिव्यापकत्वेनब्रह्मन्यसेत्।ततः ईशानःसर्वविद्यानामितिशशिनमुपरितनमूर्ध्नि ईश्वरःसर्वभूताना
मितिकल्पितचंद्रोदयस्थलंमूर्ध्निपूर्वे।।ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मनमइति इष्टंदक्षिणमूर्ध्नि शिवोमे॰

15

अग्निमीळे· पादयोः। इषेत्वा· गुल्फयोः। अग्न आयाहि जंघयोः। शन्नः जान्वोः। बृहद्रथंतरे· ऊर्वोः। स्वस्ति
नः जठरे। दीर्घायुत्वाय हृदये। श्रीश्चते कंठे। त्रातारं वक्त्रे। त्र्यंबकेन स्तनयोर्नेत्रयोश्च। मूर्धानं मूर्ध्नि॥ अथ द्वादशा
क्षरेण नारायणस्य मूर्तिन्यासः॥ ॐ केशवाय· शिरसि। नारायणाय· मुखे। माधवाय ग्रीवायां। गोविंदाय· कं
ठे। विष्णवे· पृष्ठे। मधुसूदनाय कुक्षौ। त्रिविक्रमाय· कट्यां। वामनाय जंघयोः। श्रीधराय· वामगुल्फे
हृषीकेशाय· दक्षिणे। पद्मनाभाय· वामपादे। दामोदराय· दक्षिणे। ॐ हुं हृदयाय नमः हृदये। विष्णवे· शि
रसि। ब्रह्मणे शिखायां। ध्रुवाय· कवचे। चक्रिणे अस्त्राय फट्। अस्त्रं हस्तयोः। नमः शंभवाय· गायत्री दक्षिण
नेत्रे। विजयाय· सावित्री वामनेत्रे। चक्रिणे चक्ररूपाय· पिंगलाक्ष्यं दिक्षु॥ इत्यष्टांग विष्णुमंत्रन्यासः॥ सहस्र
शीर्षा· पादयोः। पुरुष एव· जंघयोः। एतावानस्य· जानुनोः। त्रिपादूर्ध्वः ऊर्वोः। ततो विराट्· वृषणयोः। तस्माद्य
ज्ञात्· कट्यां। तस्माद्यज्ञा· नाभ्यां। तस्मादश्वा· हृदि। तं यज्ञं· स्तनयोः। यत्पुरुषं· बाह्वोः। ब्राह्मणोस्य· मुखे॥ चंद्रमा
मनसो· चक्षुषोः। नाभ्या आसीद्· कर्णयोः। यत्पुरुषेण· भ्रुवोः। सप्तास्येति· भाले। यज्ञेन यज्ञं· शिरसि। अद्भ्यः

वामपादे। भवेनमइतिकीर्तिंदक्षिणपाणौ। अभवेनमइतिलक्ष्मींवामपाणौ। नातिभवेनमइतिमेधांनासायाम्
भवस्वमांनमइतिकांतिंशिरसि। भवनमइतिस्वधांदक्षिणबाहौ। उद्भवायनमइतिप्रभांवामबाहौ॥ इतिसद्यो।
जातकलाष्टकं। ततस्तमाद्याःसर्वाःअत्रविपूर्णास्त्वितिकलांतरन्यासभावनांकृत्वामुद्रांश्चप्रदर्श्यविद्यादेवंहं
संसंपाद्यहंसहंसेतिहृदयादिन्यासंकुर्यात्॥ अथनृसिंहे। नृसिंहउग्ररूपज्वलज्वलप्रज्वलप्रज्वलस्वाहा॥
इतिमंत्रः॥ नारसिंहीयदास्याप्यात्वधिवास्यनिशागमे॥ कृत्रिमंवायसाक्षाद्वापशुंदत्त्वाबलिंहरेत्॥ एवंन्यासंकृत्वा
परमेष्ठिनंनमस्कृत्यनिद्रामावाहयाम्यहं॥ मोहिनीसर्वभूतानांमनोविभ्रमकारिणी॥ विरूपाक्षेशिवेशांतेआगच्छ
त्वंतुमोहिनि॥ वासुदेवहितेकृष्णेकृष्णांबरविभूषिते॥ आगच्छसहसाजस्रंसुप्तसंसारमोहिनि॥ सुषुप्स्वसंहरे
देविकुमार्येकांतमानसे॥ श्रमनिस्वासवाह्येत्वआगच्छभुवनेश्वरि॥ तमःसत्वरजोपेतेआगच्छत्वरिवारिणि॥ म
नोबुद्धिरहंकारःसंहारस्त्वंसरस्वति॥ शब्दस्पर्शश्चरूपंचरसोगंधश्चपंचमः॥ आगच्छगृह्णसंक्षिप्यमोहपाशनि
बंधिनि॥ भवस्योत्पत्तिहेतुस्त्वंयावदाभूतसंप्लवं॥ भुवःकल्पांतसंध्यायांवससेत्वंचराचरे॥ भोगिशय्याप्रसुप्तस्य

अस्तुनमइति मरीचीमुत्तरमूर्ध्नि। सदाशिवेनमइति ज्वालिनीं पश्चिममूर्ध्नि। ततः तत्पुरुषाय विद्महे नमइति पू
र्ववक्त्रे शान्तिं। महादेवाय धीमहीति दक्षिणवक्त्रे विद्यां। तन्नो रुद्र इत्युत्तरवक्त्रे प्रतिष्ठां। प्रचोदयादिति पश्चिम
वक्त्रे धृतिमिति तत्पुरुषकलाचतुष्टयन्यासः॥ ततः अघोरेभ्य इति मोहं हृदये। अथघोरेभ्यो नमइति रजां सुरसि
। घोरजरायै स्कंधयोः। घोरतरेभ्यो निद्रायै। नाभौ। सर्वेभ्यः सर्वव्याध्यै कुक्षौ। सर्वशर्वेभ्यः मृत्यवे पृष्ठे। नम
स्ते अस्तु क्षुधायै वक्षसि। रुद्ररूपेभ्यस्तृष्णायै उरसि। इत्यष्टावघोरकलाः॥ वामदेवाय नमइति रजां गुह्ये।
ज्येष्ठाय नमइति रक्षां लिंगे। श्रेष्ठाय नमइति रतिं दक्षिणोरौ। रुद्राय नमइति कल्यां वामोरौ। कलाय नमइति
कामां दक्षिणजानौ। कलविकरणाय नमइति संजीविन्यै वामजानौ। बलविकरणाय नमः क्रियायै दक्षिण
जंघायां॥ बलाय नमः वृद्धै वामजंघायां। बलप्रमथनाय नमः छायायै दक्षिणस्फिचि। प्रथमनाय नमः धात्रीं वामस्फिचि स
र्वभूतदमनाय नमइति भ्रामणीं कट्यां। मनोन्मनाय नमइति पोषिणीं दक्षिणपार्श्वे। उन्मनाय नमइति ज्वरां वामपार्श्वे
इति त्रयोदशकलाः॥ सद्योजातं प्रपद्यामि नमइति सिद्धिं दक्षिणपादे। सद्योजाताय वै नमो नमइति ऋद्धिं

प्र॰म॰
१७



प्रागादितः खड्गाय॰ गदायै॰ चक्राय॰ शंखाय॰ पद्माय॰ हलाय॰ मुशलाय॰ शार्ङ्गाय ॥ इति तृतीयावरणं ॥ अथ मूर्तीशाः ॥ पृथिवीमूर्तये॰ पृथिवीमूर्त्यधिपतये शर्वाय॰ अग्निमूर्तये॰ अग्निमूर्त्यधिपतये॰ पशुपतये॰ यजमानमूर्तये॰ यजमानमूर्त्यधिपतये॰ उग्राय॰ अर्कमूर्तये॰ अर्कमूर्त्यधिपतये रुद्राय॰ जलमूर्तये॰ जलमूर्त्यधिपतये भवाय॰ वायुमूर्तये॰ वायुमूर्त्यधिपतये॰ ईशानाय। इंदुमूर्तये॰ इंदुमूर्त्यधिपतये महादेवाय। खमूर्तये॰ खमूर्त्यधिपतये भीमाय॰ इत्यष्टौ मूर्तीस्तदधिपांश्चार्चयेत्। वैष्णवे॰ पंचैव मूर्तयः। तद्यथा पूर्वे पृथिवीमूर्तये नमः। पृथिवीमूर्त्यधिपतये वासुदेवाय। दक्षिणे जलमूर्तये। जलमूर्त्यधिपतये संकर्षणाय। पश्चिमे अग्निमूर्तये। अग्निमूर्त्यधिपतये प्रद्युम्नाय। उत्तरे वायुमूर्तये। वायुमूर्त्यधिपतये। अनिरुद्धाय॰ मध्ये खमूर्तये। खमूर्त्यधिपतये नारायणाय॰ इति॰ शैवे पंचमूर्तिपक्षे॰ ब्रह्मविष्णुरुद्रेश्वरसदाशिवाः पंचमूर्तयः। इन्द्रादयस्तु सर्वत्र पूजनीयाः। ततः आचार्यः क्रमेण पलाशोदुंबराश्वत्थापामार्गशमीसमिधां प्रत्येकं द्वादशसहस्रं षट्त्रीण्यष्टसहस्रमष्टशतं वा हिरण्यगर्भ इति कुंडसमीपे संस्थाप्य शांतिकपौष्टिके मंत्रैर्यथाविभागं सऋत्विक् जुहुयात्। प्रतिकुंडमेकैक

रा॰म॰
१७

वासुदेवस्यशाशने॥त्वंप्रतिष्ठासिवैदेविमुनियोनिसमुत्थिते।पितृदेवमनुष्याणांसयक्षोरगरक्षसां॥पशुपक्षिमृ
गाणांचयोगमायाविवर्धिनि॥ब्रह्म सेसर्वसत्वेषुमातेवहितकारिणि॥एहिसावित्रिमूर्तिस्त्वंचक्षुर्भ्यांस्थानगोच
रे॥विशनासापुटेदेविकंठेचोत्कंठितादिश॥प्रतिभावयमांसर्वमातृवद्देविसुंदरि॥इदमर्घ्यंमयादत्तंपूजेयंप्र
तिगृह्यतां॥उपमागात्परमंयदितिमंत्रोयंतस्याःपूजाविधेःस्मृतः॥ निद्राकलशेनिद्रांपूजयित्वा लोकपालमातृ
क्षेत्रपालभूतेभ्योबलिंदत्वास्थाप्यदेवंप्राच्यातःप्राच्यांसर्वतोभद्रेपूजयेत्॥विष्णुश्चद्वादशारेचक्रेमध्येऽष्ट
दलेपद्मेमूलमंत्रेणदेवंनिवेशयेत्॥ॐ हुंहृदयायनमः।इतिकर्णिकायांहृदयंपूजयेत्।विष्णवेनमइतिशिरः
पूर्वपत्रे।ब्रह्मण्यायनमइतिशिखांदक्षिणे।ध्रुवायनमइतिकवचं।पश्चिमे।चक्रिणेनमइत्यस्त्रमुत्तरे।शंभवाय
नमइतिगायत्रीमाग्नेयदले।विजयायनमःसावित्रीमीशानदले।ज्योतीरूपायनमोनैर्ऋत्ये।चक्रिरूपायनमः पिंग
लास्त्रं·वायव्ये॥इतिगर्भावरणम्॥आ स्तुपूर्वादिक्रमेण॥ केशव·नारायण·माधव·गोविंद· विष्णु·मधुसूद
न·त्रिविक्रम·वामन·श्रीधर·हृषीकेश·पद्मनाभ·दामोदर·॥इतिद्वादशमूर्तीःपूजयेत्॥इतिद्वितीयावरणम्॥

ॐ भूर्भुवः सुवश्चंद्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा॥ ॐ भुवो वायवे चांतरिक्षाय च महते च स्वाहा॥ ॐ सुवरादित्याय दिवे च महते च स्वाहा॥

॥ ॥ ० वी॰ पं॰ ५ को ० ॥ ४ ॥ ४ ॥=



पो हि ष्ठेति जलमूर्तेः विभूषन्नग्न उभयानिति जलमूर्तिपतेर्भवस्य। इमं मे वरुणेति वरुणस्य। वात आवातु भेषजमिति वायुमूर्तेः। तमीशानमिति वायुमूर्तिपतेरीशानस्य। आनो नियुद्भिरिति वायोः। वयं सोम व्रतइति सोममूर्तेः। इदं तं सुभेति सोममूर्तिपतेर्महादेवस्य। अभि त्यं देवं सवितारमिति कुबेरस्य। आदित्प्रत्नस्येति खमूर्तेः। मृगो न भीमः॥ खमूर्तिपतेर्भीमस्य। अभि त्वा देव सवितरितीशानस्य। ततो ष्टसहस्राष्टशताष्टाविंशत्यष्टान्यतमसंख्यया महाव्याहृतिभिस्तिलयवव्रीहिचर्वाज्यैः क्रमेण प्रत्येकं जुहुयुः॥ ततो गुरुः स्थाप्यदेवतालिंगकेन मंत्रेण घृतेन तिलैर्वाष्टसहस्रमष्टशतं वा हुत्वा पूर्णाहुतिं हुत्वा देवस्य दक्षिणकर्णे होमं निवेद्य॰ पूर्वकुंडे घृताहुत्यष्टकं मूलमंत्रेण हुत्वा देवपादौ स्पृशेत्। मूलमंत्रेण पूर्वोक्तसंख्यया याम्यकुंडे हस्तेन दधि हुत्वा देवनाभिं। वारुणकुंडे क्षीरं हुत्वा हृदयं। सौम्यकुंडे मध्वाहुतीर्हुत्वा मूर्धानं। वारुणकुंडे मिश्रं घृतादिचतुष्टयं हुत्वा॰ तेनैव पूर्णां दत्वा देवसर्वांगं स्पृशेत्। ततः कूर्मशिलाब्रह्मशिलापिंडिकावाहनादिपरिचारकदेवांश्च वैदिकैर्नाममंत्रैर्वा संपूज्य मुख्यप्रतिमाया वामपार्श्वेऽधिवासयेत्। तानि मधुघृतेनाभ्यज्य प्रक्षाल्य संपूज्य वस्त्रेणाच्छाद्य प्रतिमायाः पिंडिकायां स्वमंत्रन्यासं कु



18

न्त्विकू मूर्तिपास्तत्तन्मंत्रेण पूज्याः॥ शन्नोवातः पवतां मातरिश्वाशन्नस्तपतु सूर्यः। अहानि शंभवंतु नः शंरा त्रिः प्रतिधीयतां॰ शन्न इन्द्राग्नी॰ शन्नो देवीरभि॰ ॥ इति शांतिकमंत्राः॥ पुष्टिर्नरण्वा क्षिति॰ गयस्फानो अमीव हा॰ त्र्यंबकं॰ इति पौष्टिकाः॥ ततो मूर्तिपाः॥ पूर्वकुंडे पलाशसमिधामष्टसहस्रमष्टशतं वा घृतेन तिलैर्वा अग्निमि ळे॰ इति जुहुयुः। इषेत्वेति दक्षिणे। अग्न आयाहीति पश्चिमे। शन्नो देवीरित्युत्तरे॰ यदाष्टौ कुंडानि। तदा॰ ॐ वो षडि त्याग्नेये। दश प्रणवान् सहस्रशीर्षा पञ्चोक्त्वा नैर्ऋते। जातवेदस इति वायव्ये॥ नमो ब्रह्मण इतीशानकुंडे। मूर्द्धानं दिव इति पूर्णाहुतिं जुहुयुः। आहुतिसंपातान् शांतिकलशे कुंडसमीपस्थे पातयेयुः। ततो मूर्त्तिमूर्त्तिपलोकपालेभ्यः समि द्भिर्घृतेन तिलैर्वाष्टसहस्रमष्टशतं वा जुहुयुः। तेषां मंत्रास्तु स्योना पृथिवीति पृथिवीमूर्त्तेः। अघोरेभ्य इति मूर्त्तिपतेः। शर्वस्य। इन्द्रा यं सोमरुत्तत इति द्रस्य। अग्निं दूतमित्यग्निमूर्त्तेः॥ यः पशूनामित्यग्निमूर्त्तिपतेः पशुपतेः। अग्न आया हीत्यग्नेः। असि हि वीरसेन्य इति यजमानमूर्त्तेः। तमिंद्रं जोहवीमीति यजमानमूर्त्तिपते रुग्रस्य। यमाय सोमिति यमस्य उदुत्यं जातवेदसमिति सूर्यमूर्त्तेः। आ वो राजानमध्वरस्येति सूर्यमूर्त्तिपते रुद्रस्य। असुन्वंतं समं जहीति निर्ऋतेः आ

=३ यः पशूनां रक्षिता विष्ठितानां प्रजापतिः प्रथमजा ऋत(५ = पूर्वकमलार्थे पूर्वादिक्कुंडेषु क्रमेणालादिर पलाशोदुंबराश्वत्थवटापामार्गाश्वत्थशमी॰
स। सहस्रधामा जुषतां हविर्नः स्वाहा ३॥ = ॥ ३ (

बिल्वनारिंगमातुलिंगबदरी आमलकमिति फलाष्टकं नैर्ऋत्ये ॥ मंत्रसाधितं पंचगव्यं वारुणे । शम्युदुंबराश्व
त्थन्यग्रोधपलाशकषायपंचकं वायव्ये ॥ शंखपुष्पी सहदेवी बला शतावरी कुमारी गुडूची वचा व्याघ्रीति मू
लाष्टकं सौम्ये ॥ वल्मीकादिसप्तमृत्तिका ईशानकुंभे निधाय हिरण्यवर्णा हरिणीमिति मध्यकुंभानभिमंत्र्य
शेषानुगंधोदकपूरितानु मध्यमादिकलशानां समंतात् पूर्वादिक्रमेण । शैवि न्यस्य मूलमंत्रेणाभिमंत्र्य सू
त्रेणावेष्ट्यांतर्बहिरधस्तादूर्ध्वं च प्रासादं पंचगव्येन संप्रोक्ष्य मूर्धानं दिव इति वल्मीकमृदा विलिप्य स
मुद्रज्येष्ठा इतीशानदिक्स्थेन मृत्तिकाकुंभेन स्नपयेत् यज्ञायज्ञा व इति वायव्येन कषायकुंभेन पयः पृथिव्या
मिति वारुणेन पंचगव्यकुंभेन । याः फलिनीरिति नैर्ऋत्यफलकुंभेन । हंसः शुचिषदिति सौम्यस्थमूलकुंभेन
विष्णो रराटमसीति पूर्वकुंभेन । सोमं राजानमिति वह्निस्थकुंभेन । विश्वतश्चक्षुरिति याम्यकुंभेन । नमोस्तु सर्पे
भ्य इति मध्यमकुंभेन । इदमापः प्रवहतेत्यष्टभिः पूर्वादिक्रमेण प्रासादं सशिखरं स्नापयेत् । एकाशीति ।
कुंभासंभवे तु गंधोदकपूरितेनैककलशेन · देव्यायकर्मणे शुंधध्वमिति संप्रोक्ष्य सूत्रेणावेष्ट्य स्नापयित्वा

येत्॥तत्रविष्णुश्चैतस्याप्यस्त्रदा।ॐ घं ढं पं भं फं लक्ष्म्यैनमः।एतानिपंचाक्षराणिहृच्छिरः शिखाकवचनेत्रसं
स्त्रकानिहुंफडंतोवावचनसमुदायः इतिपिंडिकायांपंचांगानिन्यस्य।तत्त्वत्रयमूर्त्तिमूर्त्तिपांश्चपूर्ववद्विन्यसे
त्।तदाॐ ह्रीं श्रीं ह्रां क्षः परब्रह्मणेसर्वाधारायनमः।ॐ ह्रीं श्रीं ह्रां दिव्यतेजोधारिण्यैसुभगायैनमः इतिमंत्राभ्या
मधिवासयेत्।इत्यधिवासनं।प्रासादोपिचेन्नूतनस्तस्याप्यधिवासनं।तत्रप्रासादाग्रेएकाशीतिपदंमंडलम्
अक्षतैःकृत्वातेषुसप्तधान्यपुंजान्कृत्वाजलपूर्णानेकाशीतिकुंभानाहृत्यतत्रनवनवकोष्ठकानांमध्यंमध्यं
कोष्ठंज्ञात्वातेषुनवकुंभान्मध्यपूर्वादिक्रमेणविन्यस्यमध्यकुंभेशम्युदुंबराश्वत्थचंपकाशोकपलाशप्ल
क्षन्यग्रोधकदंबाम्रबिल्वार्जुनवृक्षसंभवपल्लवद्वादशकंसोमायवनस्पत्यंतर्गतायनमइतिनिक्षिपेत्॥त
तःपद्मकरोचनादूर्वांकुरदर्भपिंजूलश्वेतपीतसर्षपसितरक्तचंदनजातीकुसुमकुंदनद्यावर्तमितिदश
कंपूर्वेयवव्रीहितिलसुवर्णरजतसमुद्रगामिनदीकूलमृत्तिकाभूम्यस्पृष्टगोमयमितिसप्तकमाग्नेये।सहदे
वीविष्णुक्रांताभृंगराजमहौषधीशमीशमा वरीगुडूचीश्यामाकमित्यष्टकंयाम्ये।कदलीपूगीफलनारिकेल

= ई आजिघ्रकलशंमह्युरुधाराःपयस्वसा वाविशन्त्विंदवःसमुद्रमिवसिंधवःइतिमंत्रेणाहृत्स ई =

वित्तानुसारतः॥ विनाधिवासनं यत्तु कृतोपि न फलप्रदः इति ततो गुरुर्बहिर्निर्गत्य प्रासादाभिमुखो भूत्वा तद्देवरूपं ध्यायेत्। तथाहि॰ पादौ पादशिला तस्य जंघा पादोर्ध्वमुच्यते॥ गर्भश्चैवोदरं ज्ञेयं कटिश्च कटिमेखला स्तंभाश्च बाहवो ज्ञेया घंटा जिह्वा प्रकीर्तिता दीपः प्राणोस्य विज्ञेयो ह्यपानो जलनिर्गमः ब्रह्मस्थानं यदेतच्च तन्नाभिः परिकीर्तिता॥ हृत्पद्मं पिंडिका ज्ञेया प्रतिमा पुरुषः स्मृतः पादचारस्त्वहंकारो ज्योतिस्तच्चक्षुरुच्यते तदूर्ध्वं प्रकृतिस्तस्य प्रतिमात्मा स्मृतो बुधैः तलकुंभादधो द्वारं तस्य प्रजननं स्मृतं शुकनासा भवेन्नासा गवाक्षः कर्ण उच्यते॥ कपोतपालीः स्कंधोस्य ग्रीवा चामलसारिका॥ कलशस्तु शिरो ज्ञेयं मज्जादि मदसंहितं मेदश्चैव सुधां विद्यात् लेपो मांसमुच्यते अस्थीनि च शिलास्तस्य स्नायुः कीलादयः स्मृताः चक्षुषी शिखरास्तस्य ध्वजाः केशाः प्रकीर्तिताः एवं पुरुषरूपं तं ध्यात्वा च मनसा सुधीः प्रासादं पूजयेत्पश्चाद्गंधध्वजादिभिः शुभैः सूत्रेण वेष्टयेद्देवं वासस्तत्परिकल्पयेत् प्रासादमेवमभ्यर्च्य वाहनं चाग्रमंडपे इति ततः कुंडे वास्तोष्पत इति मंत्रेणाष्टोत्तरशतं हुत्वा देवमंत्रेण च हुत्वा पूर्णाहुतिं ततः सर्वं कृत्वा दिग्बलिं दत्वा देवसमीपमागत्य यथासंभवं भूसुवर्णादिकं दत्वा

देवरूपंप्रासादं चिंतयित्वा पताकादिना शोभयित्वा गंधादिना पूजयित्वा तस्याधस्ताद्देवं संचिंत्य मंत्रेण प्रास
दमधिवासयेत् तद्यथा॰ ॐ ह्रीं सर्वदेवमयाचिन्त्यसर्वरत्नोज्वलाकृते यावच्चंद्रश्च सूर्यश्च तावदत्र स्थिरो
भवेत्यधिवास्य पिंडिकावाहनपरिवारदेवतानां तत्तन्मंत्रैः प्रत्येकमष्टाविंशतिसंख्याकं होमं तिलैः कृत्वा
मूलमंत्रेण चर्वष्टोत्तरशतं हुत्वा च तत्रो गा विष्णुगायत्र्या दुग्धा क्षीरेण विष्णुगायत्र्या चरुं श्रपयित्वा देवाय
प्री॰५ निवेद्य द्वादश ब्राह्मणान्भोजयित्वा विष्णुर्मे प्रीयतामिति वदेत् तत आचार्याय धेनुं दत्वा रात्रौ जागरणं कुर्या
त् इति प्रासादाऽधिवासनं अत्र ज्येष्ठमध्यमकनिष्ठानां प्रतिमानां सप्तरात्रं पंचरात्रं —— त्रिरात्रमेकरात्रं स
द्यो वानल्पं तमधिवासनं कुर्यादिति पद्धतिकाराः अत्र श्लोकाः अनेकदिननिर्वर्त्ये अधिवासनकर्मणि हो
मानष्टौ सहस्राणि विदधीरन्पृथक् पृथक् तस्मिन्नेकाहनिर्वर्त्ये कुर्यादष्टोत्तरं शतं प्राग्वत्पूर्णाहुतिं हुत्वा स
कृज्जपं तिहारणाः। यद्वा प्रतिदिनं होममष्टोत्तरशतं शतं देशिको मूर्तिपैः कुर्याद्यावत्कार्यं समाप्यते संध्यासु
तिसृषु बलिं मंत्रैर्दद्याद्यथादितः आचार्ये दक्षिणा देया नकृतिगम्या स्वशक्तितः भोजनं च ततस्तेभ्यो देयं॥

गृहीत्वा विप्रा भावार्थे पुष्पोदकधारया ऽस्त्र मंत्रेण शंतातीयेन वा प्रासादमभ्युक्ष्य महाँ इन्द्रो य इति दर्भेणोल्लि
ख्यास्त्र पूतजलेन पुनः प्रोक्ष्य प्रासादस्य द्वारस्य च मध्याद्यावेन यवार्धेन वेशानी मुत्तरां वा ऽऽश्रित्य स्नानादि सं
स्कृतां कूर्मशिलां प्रणवेन पंचरत्नोपरि निधाय तच्छिद्रे सौवर्णं कूर्मं द्वारसंमुखं निधाय तदुपरि रत्नानि निधाय
ष ट्त्रिंशद्धस्तयुतां पंचचत्वारिंशद्धस्तयुतां वा ब्रह्मशिलामधिवासितां निदध्यात् ॐ नमो व्यापिनि स्थिरे अच
ले ध्रुवे। ॐ श्रीं लं स्वाहेति मंत्रेण यथाशक्ति संपूज्य त्वमेव परमा शक्तिस्त्वमेवासन धारिका शिवाज्ञयात्वया
देवि स्थातव्यमिह सर्वदेति मार्थयेत्॥ ततो वर्णाध्वने॰ पादाध्वने नमः। मंत्राध्वने॰ भुवनाध्वने॰ तत्त्वाध्वने॰ स
कलाध्वने॰। इति सकलमध्वानं तदारूढं ध्यायेत्। ततः पुण्याहवाचनं कृत्वा मूलमंत्रेणाष्टोत्तरशतं हुत्वा ष
ट्त्रिंशत्सु पंचचत्वारिंशत्सु वा ब्रह्मशिलागतेषु प्रादक्षिण्येन महेश्वाद्दक्षेनरत्नन्यासं कुर्यात् श्वभ्ररहिते ब्रह्मशि
लोपरिभागे सश्वभ्रां पिंडिकां पूर्वपश्चिमानने प्रासादे सौम्यप्रणाली दक्षिणोत्तरानने पूर्वप्रणालीं ध्रुवसूक्तेन नि
धाय देवपत्नी लिंगकेन मंत्रेण पिंडिकामभिमंत्रयेत् तत्र विष्णोः स्थापनायां श्रीश्चते लक्ष्मीश्च पत्न्यो॰ रुद्र

२१

रा॰ म॰
२१

देवायचात्मानंनिवेद्यमणमेत् यत्रतुस्वयंभूर्देवः प्रागेववाप्रतिष्ठितः प्रासादश्चनूतनः तत्रापितदुत्तरेमंडपंकृ
त्वा पूर्वेद्युःपुण्याहवाचननांदीश्राद्धदेवप्रतिष्ठोक्तमंडपस्थापनर्त्विग्वरणादिकंकुर्यात् तत्रगुरुर्वेद्यांतद्देवता
मंडलंकृत्वावास्तुदेवतापूजनाग्निप्रतिष्ठाग्रहपूजाज्यभागोत्तरग्रहहोमशिख्यादिवास्तुपीठदेवतावास्तुदेवता
होमैकाशीतिकलशस्थापनानिकृत्वातैःप्रासादंक्षालयित्वायजमानमभिषिच्यप्रासादमुत्सृजेदित्येतावानेव
वविधिः॥अथमंडपादुत्तरतःपूर्वंकल्पितैःशांतिकलशादिजलैस्तंडलाष्टदलोपरिस्थभद्रासनोपविष्टंस
परिवारंयजमानमभिषिंचेयुः ततःआचार्यमूर्तिपब्राह्मणस्थपत्यादीनुपरितोष्यप्रासादोत्सर्गंकुर्यात् ॥
तत्रमासपक्षाद्युल्लिख्यइमंशिलेष्टकादार्वादिनिर्मितंवलभीजगतीप्राकारपरिवारगोपुरपरिवारदेवताल
यसंयुतंतद्देवतालोकावाप्तिकामःकुलद्वयानुग्रहायामुकदेवताप्रीतयेहमुत्सृजामीतिकुशयवजलानि
क्षिप्त्वादेवंनत्वाब्राह्मणान्भोजयेदिति ततःप्रातराचार्योमूलमंत्रेणमूर्तिमूर्तिपतिलोकपालमंत्रैश्चप्रतिदैवतम
ष्टशतंअष्टाविंशतिंवापूर्णाहुत्यंतंस्वकुंडेहुत्वाऽधिवासितांकूर्मशिलांब्रह्मशिलांपिंडिकांचन्यातारभिंद्रमिति॰

मूर्त्तिपैः

रुअर्ज़ुनोपीरवैष्णवीसहदेवीलक्ष्मणा चेति तत्रबीजानामभावेयवान् रत्नानामभावेवज्रं धातूनामभावे
हरितालं ताम्राद्यभावेसुवर्णं ओषधीनामभावेसहदेवींन्यसेत् इति एवंन्यस्तानांरत्नानांदिक्पालमंत्रैरालं
भनंकृत्वा० पृथिवीमेरुकूर्मवाहनानिसौवर्णानिद्वारोन्मुखानिपारदंच तस्मिन्मध्यश्वभ्रे निधाय गुग्गुलुरसेनर
त्नादिकंस्थिरीकृत्य मधुपायसेनश्वभ्रमनुलिप्य वस्त्रेणाच्छाद्य कवचेनावगुंठ्यास्त्रमंत्रेणसंरक्ष्य गृहावैमति
ष्ठितिप्रासादमभिषिंचेद्ब्रह्मादिभ्योबलिंदत्वाचामेत्॥एवंपिंडिकांप्रतिष्ठाप्यप्रासादाद्बहिरष्टदिक्षुस्थंडिलानिसंपा
द्य संस्कृत्यतत्स्थंडिलानामीशानभागेषुकलशान्मंत्रवह्निमस्याग्नीन्प्रणीयप्रतिस्थंडिलंपलाशसमिधामष्टोत्त
रसहस्रमष्टशतंवामूलमंत्रेणहुत्वाज्येनच॥ ॐनारायणायविद्महेवासुदेवायधीमहि।तन्नोविष्णुःप्रचोदया
त्।इतिमंत्रेणाष्टोत्तरशतमष्टाविंशतिमष्टौवाहुत्वाऽऽचार्योऽष्टदिक्संस्थेभ्यःकुंभेभ्यःपात्रेतोयमुद्धृत्यमूल
मंत्रेणंशतकृत्वोभिमंत्र्यप्रतिमासन्निधौगत्वा सर्वतीर्थमयमिदंजलमिति ध्यायन्देवमूर्ध्न्यभिषिंचेत् नरसिंहे
नहुंफडंतेनदेवस्यदिग्बंधनंकृत्वा मूर्तिपैःसहदेवंप्रार्थयेत् प्रबुध्यस्वमहाभागदेवदेवजगत्पते मेघश्यामग

स्यगौरीर्मिमाय॰ सूर्यस्य॰ उषस्तस्मिन्नमाभरेत्यादि॰ ततआत्मतत्वाय॰ आत्मतत्वाधिपतये क्रियाशक्त्यै॰ विद्या
तत्वाय॰ विद्यातत्वाधिपतये ज्ञानशक्त्यै॰ शिवतत्वाय॰ शिवतत्वाधिपतये इच्छाशक्त्यै॰ इतितत्वन्यासः ॰ प्र
तितत्वंमूर्त्तिमूर्त्तिपतिलोकपालान्विन्यसेत् ततःपिंडिकायां आधारशक्त्यैनमइतिन्यस्यानंतासनतत्वेभ्योनमः
आसनशक्तिभ्योनमइत्युक्त्वाभ्यर्च्य सर्वदेवमयीशाने त्रैलोक्याल्हादकारिणी त्वांप्रतिष्ठापयाम्यत्रमंदिरे
विश्वनिर्मिते यावच्चंद्रश्च सूर्यश्च यावदेषावसुंधरा तावत्त्वंदेवदेवेशिमंदिरेस्मिन्स्थिराभव सुखानासुभ्रतो॥
लक्ष्मीमचलामजरामृतां अभयंसर्वभूतेभ्यःकर्तुर्नित्यं विधेहिभोः विजयंनृपतेःसर्वलोकानांक्षेममेवच सु
भिक्षंसर्वेवसूनांकुरुदेविनमोनमः इतितांप्रार्थ्यप्रणवंश्वभ्रेबाह्येषोडशस्वरान् तेषांपरितोव्यंजनानिन्यस्य।
श्वभ्रांतेरत्नादीन्निन्यसेत् यथाबाह्यपरिधौयवव्रीहिनिष्पावप्रियंगुतिलमाषनीवारशालिसिद्धार्थकान् वज्र
मौक्तिकवैडूर्यशंखस्फटिकपुष्परागचंद्रकांतेंद्रनीलपद्मरागान् मनःशिलाहरितालांजनश्यामांजनकौसीसौ
राष्ट्रीरोचनागैरिकपारदान् सुवर्णरौप्यताम्रआयसत्रपुसीसकांस्यारकूटतीक्ष्णलोहानि श्वेतरक्तचंदनाग

ततऋष्यादीन्क्रमेणाशिरोमुखहृदयनाभिगुह्यपादेषुविन्यस्य ॐ कंखंगंघंङं अंपृथिव्यप्तेजोवाय्वाकाशात्म
नेआंहृदयायनमः। ॐ चंछंजंझंञंइंशब्दस्पर्शरूपरसगंधात्मने ईंशिरसेस्वाहा। ॐ टंठंडंढंणंउंश्रोत्रत्वक्
चक्षुर्जिह्वाघ्राणात्मने ऊंशिखायैवषट्। ॐ तंथंदंधंनं एंवाक्पाणिपादपायूपस्थात्मने ऐंकवचायहुं। ॐ पंफं
बंभंमं ॐ वचनादानविहरणोत्सर्गानंदात्मने ओंनेत्रत्रयायवौषट्। ॐ अंयंरंलंवंशंषंसंहंळंक्षंमनोबुद्ध्यहंकार
चित्तात्मने अः अस्त्रायफट्। एवमात्मनिदेवेचकृत्वादेवंस्पृष्ट्वाजपेत्॥ ॐ आंह्रींक्रोंयंरंलंवंशंषंसंहंसः। देव
स्यप्राणाइहप्राणाः॥ पुनः ॐ आंह्रींक्रोंइत्यादिदेवस्यजीवइहस्थितः। ॐ आंह्रींक्रोंइत्यादिदेवस्यसर्वेन्द्रिया
णि॥ ॐ आंह्रींक्रोंइत्यादिदेवस्यवाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणप्राणा इहागत्यस्वस्तयेसुखंचिरंतिष्ठंतुस्वाहा
इति॥ ध्रुवाद्यौरितिसूक्तंचजपित्वा॥ ततोर्चाहृद्यंगुष्ठंदत्वाजपेत्॥ अस्यैप्राणाःप्रतिष्ठंतु। अस्यैप्राणाःक्ष
रंतुच। अस्यैदेवत्वमर्चायैस्वाहेतियजुरीरयेत्। प्रणवेनसंरुध्यदेवंसजीवंध्यात्वाविश्वतश्चक्षुरित्युक्त्वादे
वमूर्ध्निहस्तंनिधायपरंदेवंध्यात्वारुद्रसूक्तैर्वत्ससामनीजप्त्वाप्रातिष्ठिकान्मंत्रांश्चजपेत् तत्रविष्णोः॥

दापाणेप्रबुद्धकमलेक्षण॥प्रबुद्धभूधरानंतवासुदेवनमोस्तुत इति॥जलक्षीरकुशाग्रतिलतंडुलयवसिद्धार्थ
कपुष्पाणिशंखेकृत्वा शंखमुद्रयादेवायार्घ्यंदत्त्वोत्तिष्ठब्रह्मणस्पत इतिदेवमुत्थाप्यरथमुपवेश्य देवस्यपुरतोगु
रुः पृष्ठतोयजमानः पार्श्वतोमूर्तिपाः एवंपरिभ्राम्यस्थापयेद्देवतार्थप्रासादद्वारसंमुखंलिंगंकृत्त्वार्घ्यंदत्त्वाप्रासादं
प्रवेशयेदिति ततःसयजमानोदैशिकोदेवंपिंडिकायांस्थापयेत् तद्यथा सुलग्नेईश्वरंभावयन्श्वभ्रन्यास
द्रव्यसहितंसौवर्णपद्मंश्वभ्रेनिधाय प्रधानपुरुषोयावद्यावच्चंद्रदिवाकरौ।तावत्त्वमनपाशन्त्यायुक्तोनेव
स्थिरोभवेत्युक्त्वा ध्रुवाद्यौर्ध्रुवापृथिवीतिमंत्रंपठित्वायवंपवार्धंवोतएभिनमोशानाभ्रितंवादेवंपिंडिवा॥श्वभ्रेनि
धायस्थिरोभवशाश्वतोभवेत्युक्त्वा पिंडिकालिंगांतरालंबालुकासीसकादिभिर्दृढंपूरयित्वापुनर्नचालयेत्।
ततोदेवंमूर्ध्निहृदयेवास्पृष्ट्वाप्राणप्रतिष्ठांकुर्यात् सायथापूर्तकमलाकरोक्ता प्राणप्रतिष्ठांकुर्वीततत्सांदेव
स्यवाहरेरितिकालिकापुराणात्कार्या अस्यप्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुरुद्राऋषयः ऋग्यजुःसामा।
निछंदांसि क्रियामयवपुःप्राणाख्यादेवता आंबीजं ह्रींशक्तिः क्रोंकीलकं प्राणप्रतिष्ठायांविनियोगः ॥

सूर्याचंद्रमसौ यावद्यावत्तिष्ठति मेदिनी ॥ तावत्त्वयात्र देवेश स्थातव्यं स्वेच्छया प्रभो॰ इति॰ अथ स्थापितस्य परिवारदेवताः । नंदिमहाकालवृषभभृंगिरिटिस्कंदोमा विनायकविष्णुब्रह्मजयंतेंद्राग्नियमनिर्ऋतिव- रुणवायुसोमेशानाप्सरोगणगंधर्वगुह्यकविद्याधरादीन् रुद्रस्य । ब्रह्मणो विष्ण्वादयः परिवारदेवताः । विष्णोर्ब्रह्मादयः । एवं चंडीविनायकादीनामपि परिवारकल्पनं । ततः कुंडे षडंगहोमः । ततः पूर्वकुंडे हृदय- मंत्रेणाज्याहुतिविंशतिकं । दक्षिणकुंडे शिरोमंत्रेण । पश्चिमे शिखामंत्रेण । उत्तरे कवचमंत्रेण । आचार्यकुंडे नेत्रमंत्रेण । पुनः पूर्वकुंडेऽस्त्रमंत्रेणेति । तत आयुधमंत्रैर्हुत्वा प्रार्थयेत् तद्यथा ॥ लोकानुग्रहहेत्वर्थं स्थिरीभव सुखा- सन । सान्निध्यं हि सदा देव प्रसह परिवर्तय ॥ माभूत्पूजाविरामोऽस्मिन्यजमानः समृध्यतां ॥ संपालयस्वतां राष्ट्रं सर्वोपद्रववर्जितं ॥ क्षेमेण वृद्धिमतुलां सुखमक्षय्यमश्नुतां ॥ इति संप्रार्थ्य विधिना देवं सांगं समर्चये- दिति ॥ ततो बहिरिंद्रादीन् तत्तन्नाममंत्रैः स्थापयेत् । विष्णुश्चेच्चंडप्रचंडजयविजयादीन् । शिवश्चेन्नंदिमहा- कालभृंगिगणेशादीन् । सूर्यश्चेद्दंडपिंगलमाठरारुणादीन् ॥ अथ शिवस्य वाहनादि पूजयेत् । यस्य सिंहा

॥अतसीपुष्पसंकाशंशंखचक्रगदाधरं॥संस्थापयामिदेवेशंदेवोभूत्वाजनार्दनं॥रुद्रस्य॥त्र्यक्षंचदशबा
हुंचचंद्रार्धकृतशेखरं॥गणेशंवृषभस्थंचस्थापयामित्रिलोचनं॥अथब्रह्मणः॥ऋषिभिःसंस्तुतंदेवंचतुर्व
क्त्रंजटाधरं॥पितामहंमहाप्राज्ञंस्थापयाम्यंबुजोद्भवं॥सूर्यस्य॥सहस्रकिरणंशांतमप्सरोगणसेवितं॥पद्म
हस्तंमहाबाहुंस्थापयामिदिवाकरं॥ततोदेवस्यहृदयंस्पृशन्जपेत्।तद्यथा॥विष्णोःपुरुषसूक्तं।रुद्रस्य
रौद्रं।ब्रह्मणोब्राह्मं।रवेःसौरं।अन्येषांतत्प्रकाशकान्मंत्रान्जपित्वाप्रणवव्याहृतिशिरः सहितांगायत्री
प्राणसूक्तंचजपित्वासान्निध्यंकुर्यात्॥नमस्तेस्त्यक्तसंगायसंतोषपरमात्मने॥ज्ञानविज्ञानरूपायब्रह्म
तेजोनुशालिने॥गुणातिक्रांतवेगायपुरुषायमहात्मने॥अव्यक्तायपुराणायविष्णोसन्निहितोभव॥भग
वन्देवदेवेशत्वंपितासर्वदेहिनां॥त्वयाव्याप्तमिदंसर्वंजगत्स्थावरजंगमं॥त्वमिंद्रःपावकश्चैवयमोनिर्ऋ
तिरेवच॥वरुणोमारुतःसोमईशानःप्रभुरव्ययः॥येनरूपेणभगवन्त्वयाव्याप्तंचराचरं॥तेनरूपेणदेवेश
अर्चायांसन्निधोभव॥सर्वमंत्रादिसंयुक्तोलोकानुग्रहकाम्यया॥अस्यामर्चायांमहादेवभवसन्निहितःसदा॰

प्राणसूक्तंतु·यत्तेयमंवै·तत्त·यत्तेदिवं·तत्त·यत्तेभूमिं·तत्त·यत्तेवन्यतः।तत्त।यत्तेसमुद्रं·तत्त·यत्तेमरीचीः।तत्त·यत्तेअपो·तत्त·यत्तेसूर्यम्·तत्त·
यत्तेपर्व·तत्त·यत्तेविश्व·तत्त·यत्तेपराः।तत्त।यत्तेभूतं·तत्त·॥ ॥=टी·पं·५ कौ॰॥ ॥

प्र॰म॰
२५

वरेण भावेन स्थातव्यं सर्वदा त्वया ॥ सर्वविघ्नहरः पुंसां सर्वदुःखहरः सदा ॥ सर्वदा यजमानस्य इच्छा संपत्करो भव ॥ नमस्ते सर्वधर्माय संतोषविजितात्मने ॥ ज्ञानविज्ञानतृप्ताय ब्रह्मतेजोभिशालिने ॥ नमस्ते शुद्धदेहाय पुरुषाय महात्मने ॥ स्थापकानां मूर्त्तिपानां शिल्पिनां च विभो सदा ॥ ग्रामदेशनृपाणां च शांतिर्भवतु सर्वदा ॥ पूजकाराधकानां च भक्तानां भक्तवत्सल ॥ सर्वेषां च जगन्नाथ इच्छासिद्धिप्रदो भव ॥ चंद्रार्कावनिपर्यंतं लिंगे स्मिन्परमेश्वर ॥ स्थातव्यमुमया सार्धं सर्वलोकानुकंपया ॥ यावच्चंद्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी ॥ तावत्त्वयात्र देवेश स्थातव्यं स्वेच्छया विभो ॥ ततः पुरुषसूक्तेन विष्णोः षोडशोपचारं पूजनं कृत्वा पुराणमंत्रैरन्यैर्वा स्तुत्वा नमेत् ॥ पुनः प्रार्थयेच्च ॥ ज्ञानतोऽज्ञानतो वापि यावद्विधिरनुष्ठितः ॥ स सर्वस्त्वत्प्रसादेन समग्रो भवतान्ममेति ॥ शिवस्यापि ॥ ज्ञानतोऽज्ञानतो वापि भगवन्यत्कृतं मया ॥ तत्सर्वं पूर्णमेवास्तु त्वत्प्रसादाद्धोक्षजेति ॥ अथ कर्ता नाम युतं देवस्य नाम कुर्यात्सर्वदा व्यवहारार्थं ॥ तत्र विष्णोरमुकस्वामी ॥ अमुकनारायण इति वा ॥ शिवस्याऽमुकेश्वरः ॥ भानोरमुकादित्यः ॥ देव्या अमुकेश्वरी ॥ गणपतेरमुकविनायक इति ॥ अथ नैमित्तिकदोषेषु

२५

प्र॰म॰
२५

रश्चैस्सुमकाव्याघ्राभूतास्तथोरगाः॥ऋषयोलोकपालाश्चदेवःस्कंदस्तथावृषः॥प्रियागणामातरश्चसोमोबि
ष्णुःपितामहः॥नागायक्षाःसगंधर्वायेचदिव्यानभश्चराः॥तमहंत्र्यक्षमीशानंशिवंरुद्रमुमापतिं॥आवाह
यामिसगणंसपत्नीकंवृषध्वजं॥आगच्छभगवन्रुद्रानुग्रहायशिवोभव॥शाश्वतोभवपूजांमेगृहाणत्वंन
मोनमः॥ॐस्वागतमनुस्वागतंभगवन्नेनमोनमः॥सोमायसगणायसपरिवारायप्रतिगृण्हातुभगवान्मंत्रपू
तमिदमर्घ्यंपाद्यमाचमनीयमासनंब्रह्मणाभिहितंनमोनमःस्वाहेति॥आगच्छभगवन्नित्यादिकामंत्राउ
क्तेनसर्वसाधारणाः।एवंसंपूज्यदधिदुग्धघृतमधुशर्करारव्यैःसमंत्रैर्मध्येसुगंधजलयुतैःस्नापयेत्॥ततो
यज्ञाग्रतःततोविराट्‌·सहस्रशीर्षा·अभित्वाशूरनोनुमो·पुरुषएवेदं·त्रिपादूर्ध्वं·येनेदंभूतं·नत्वावाऽअन्यो
दिव्यो॰इतिचतुःकृत्वोजपेत्‌·प्रतिपर्यायंचजलेनदेवस्यपादौनाभिंवक्षःशिरश्चस्पृशेत्॥ततोलिंगमंत्रैःप्रा
र्थयीत॰भगवन्देवदेवेशधर्मकामार्थमोक्षद॥विद्याविद्येश्वरैरुद्रैर्गणेशैर्लोकपालकैः॥देवदानवगंधर्वैर्य
क्षैश्चकिन्नरैःसह॥अस्मिन्लिंगेमहादेवसर्वदावसवैप्रभो॥पुंसामनुग्रहार्थायस्वेच्छयावसवैप्रभो॥पर

त्क्वातद्धस्तेगोपुच्छादिसकुशतिलयवजलंनिक्षिपेत्॥ विज्ञापयेच्च॥ भगवन्सर्वधर्मज्ञशिवधर्मपरायण॥
सर्वशास्त्रार्थतत्त्वज्ञशिवशास्त्रविशारद॥ अनादिजन्मसंतानेह्यप्रमेयेभवार्णवे॥ अद्यमेसुकृतंजन्मअद्य
मेसफलंधनं॥ अद्यमेजननोच्छित्तिरद्यमेपरमंपदं॥ मोचितोहंत्वयानाथदुःखेद्याद्भवबंधनात्॥ ईश्वरात
स्त्वयायस्मात्तद्भवेनेवभवार्णवात्॥ मुक्तोहंमर्त्यसंसारात्सपन्नोहंतवांतिके॥ ज्ञानतोज्ञानतोवापियन्न्यूनं
यत्कृतंमया॥ तत्सर्वंपूर्णमेवास्तुत्वत्प्रसादात्क्षमस्वमेइति॥ गुरुरपि॥ समस्तजगदुत्पत्तिस्थितिसंहार
कारकः॥ शिवःसानुचरस्ताद्दृःसर्वदासर्वकामदः॥ द्रव्यहीनंतुयत्किंचिद्विधिहीनंतुयद्भवेत्॥ तत्सर्वंपूर्ण
मेवास्तुप्रसादात्कारणस्यतु॥ स्थापकस्यमूर्तिपानांवर्णिनांशिल्पिनांतथा॥ सराष्ट्रपार्थिवानांचशांतिर्भ
वतुसर्वदा॥ भृत्यपुत्रकलत्रैश्चस्वमित्रबलवाहनैः॥ कारणस्यप्रसादेनसर्वलोकेश्वरोभवेत्युक्त्वा यज
मानायाशिषंदद्यात्॥ ततःस्थापकमूर्तिपजपिनःऋत्विक्स्यपत्तिदैवज्ञान्संपूज्यतेभ्यःशक्तितोदक्षि
णांदद्यात्॥ अधिवासनंतुसद्योवावहुकालसाध्यंवातत्रसद्यःपक्षेचस्यमाणमधुकुंकुमादिसर्वद्रव्यैस्त

यश्चितं ॥ तत्र स्थाप्यमानदेवार्चालिंगं वा यां यां दिशमुपाश्रयेत्तत्तद्दिगीशमंत्रेणाष्टोत्तरशतसंख्यया शमीप-
लाशान्यतरसमिद्धोमं तिलहोमं वा कृत्वा पूर्णाहुत्यंतं कुर्यात् · दिगीशमंत्रास्तु · त्रातारमिंद्रमित्यादयः प्रसि-
द्धाः ॥ अत्राचार्यदक्षिणाश्च क्रमेणागजो मेषो महिषोऽजः शुक्तिर्मुक्ताफलं सवत्सयुग्मा धेनुर्वृषभद्रुसादिकाः ।
ततः स्थाप्यमाने देवे शब्दोऽस्थाने स्वभ्रांते स्फुटिते वा शांत्यर्थं मूलमंत्रेणाष्टोत्तरशतं हुत्वा प्रतिष्ठाहोमं कुर्यात् ·
शिवाय स्थिरो भव स्वाहा । शिवाय प्रमेयो भव स्वाहा । शिवायानादिबोधो भव स्वाहा । शिवाय नित्यो भव स्वाहा
। शिवाय सर्वगो भव स्वाहा । शिवायाविनाशो भव स्वाहा । शिवायाक्षमो भव स्वाहेति । अथ सर्वशांत्यर्थं अघो-
रमंत्रेणाष्टोत्तरशतं स्विष्टकृदंतं हुत्वा सर्वप्रायश्चितं पूर्णाहुतिं च हुत्वा ईशाने बलिं दत्त्वा च मध्ये शोभनासने य-
जमानमुपवेश्याथर्वणसाम्नामंत्रांतरैश्चाभिषिंचेत् । अथाचार्यपूजनम् । तत्र यजमानः आचार्यमासने उपवे-
श्य सत्कृत्य ग्रामं गोसहस्रमर्धं तदर्धं वा गोशतमर्धं तदर्धं वृषभैकादशकं पंचैकां वा गां सालंकारां यथाश-
क्ति संनिधाय · देशकालौ संकीर्त्य देवप्रतिष्ठासिध्यर्थं इमां दक्षिणां तुभ्यमहमाचार्याय संप्रददे न ममेस्तु ।

वि॰ अघोरेभ्योथ॰ वामदेवायनमो॰ सद्योजातंप्र॰ ।इतिप्रागुक्ताः। अंगमंत्राअपि। अद्भ्यःसंभूतःपृथिव्यैरसाच्च ।विश्वकर्मणःसमव॰ तस्यत्वष्टा॰ तत्पुरुषस्य॰ वेदाहमेतं॰ आदित्यवर्णंतमसःपरस्तात्। तमेवंविद्वा॰ नान्यः पंथावि॰ प्रजापतिश्चरति॰ अजायमानो॰ तस्यधीराः प॰ मरीचीनांपद॰ योदेवेभ्यआ॰ योदेवानां॰ पूर्वोयो देवेभ्यो॰ नमोरुचाय॰ रुचंब्राह्ममित्यादि॥ततऋत्विजो घृतेनतिलैर्वास्वस्वकुंडेषुशतंशतंहुत्वागौरीर्मिमा येतिमंत्रेणचजुहुयुरितिशिवस्यचतुर्थीकर्म ॥एवमन्यदेवविषयेपिपूर्ववत्स्थापितदैवत्यंचरुंश्रपयित्वास्व मंत्रैः पत्नीमंत्रैश्चसहस्रहोमंकुर्यात्॥ऋत्विजोपिघृतेनशतंशतंप्रतिकुंडंहुत्वापूर्णाहुतिंजुहुयुः।गुरुः। शालितोयेनमूर्तिंसिक्त्वानिर्माल्यमपसार्यपुनःपूजयित्वाएकाशीतिघटान्पूर्ववत्संस्थाप्यस्नापयेदिति।य द्वापुराणांतरोक्तप्रकारेणपूजयेत्॥तत्रदर्भस्तंबकुशाग्रक्षीरदूर्वामधुयवसिद्धार्थकपुष्पफलतोयान्वित मर्घ्यपात्रमासाद्यकलशाष्टसहस्रमष्टशतमष्टौचतुरोवाकलशान्सौवर्णान्राजतान्ताम्रान्रीतिकम यान्मृन्मयान्वोपकल्प्यतेषुशन्नोदेवीरापोहिष्ठेतिमंत्रैरुद्धृतंतीर्थजलंप्रक्षिप्यमृद्गोमयक्षीरदधिमधुघृ

शिवमंत्रेण ४

स्वशीतलक्ष

राम॰
२७

द्दिनएवदेवंलेपयेत् ॥ अंत्येतुप्रथमेह्निकुंकुमेनदेवं लेपयित्वापूजयेत् ॥ द्वितीयेदिनेहरिद्रासिद्धार्थकचू
र्णेन ॥ एवंतृतीयदिनेपिष्टसितचंदनयवचूर्णेन ॥ चतुर्थेमनःशिलाप्रियंगुचूर्णेन ॥ पंचमेकृष्णांजनतिलचू
र्णेन ॥ षष्ठेरक्तचंदनपद्मकेसरचूर्णेन ॥ सप्तमेगोरोचनानागकेसरचूर्णेन । सर्वलेपद्रव्येषुकपिलाघृतमि
श्रणंज्ञेयं ॥ प्रतिमानांलेपत्रयंदिनत्रयेक्रमेणकृत्वा शेषलेपांश्चतुर्थेदिनेयुगपत्कृत्वा निसंध्यंबलिदानंचानेर्वं
त्यंप्रतिकुंडेहवनंसंपादयेत् ॥ शांतिहोमंचऋत्विजःकुर्युरित्यनेकदिननिर्वर्त्येऽधिवासनेज्ञेयम् ॥ शिवस्यतु
यदाप्रतिष्ठोत्तरकालंसप्तसुदिनेषुमधुकुंकुमादिलेपाः क्रियंतेतदाष्टमदिनेस्नपनार्चनादिर्महानुत्सवोवि
धेयः ॥ इतिसर्वदेवप्रतिष्ठाविधिः ॥ अथचतुर्थीकर्म ॥ तच्चतुर्थेदिनेद्वितीयेवाकुर्यात् ॥ अमुकलिंगप्र
तिष्ठांगतयाचतुर्थीकर्मकरिष्ये इतिसंकल्प्य ॥ तत्रप्राग्वृतएवाचार्योमूर्तिपयजमानद्वारपालादिभिःसहमं
डपंपश्चिमद्वारेणप्रविश्यतत्रमहास्नानसंभारादिकमुपकल्प्य वेद्याःप्रा दक्षिण्येनगत्वा कुंडेस्थापितदेवतासं
चरुंश्रपयित्वा पंचब्रह्मभिरंगसहितैः सहस्राहुतिहोमंकु र्यात् ॥ ब्रह्ममंत्रायथा॰ ईशानःसर्ववि॰ तत्पुरुषाय

ध्येर्मयाकृता॥पूजांतुदेवदेवेशप्रसादाद्भवतस्तवेतिपुष्पं॥वनस्पतिरसोद्दिव्योगंधाढ्यःसुमनोहरः॥:
आघ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यतामितिधूपः॥त्वंचंद्रस्त्वंरविर्विष्णुस्त्वंरत्नानिहुताशनः॥त्वमेवसर्वज्यो
तींषिदीपोयंप्रतिगृह्यतामिस्वशीत्साचत्वारिंशतावादीपैरार्तिकं॥अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं
भक्ष्यभोज्यसमायुक्तंगृहाणानुकंपया॥मंत्रहीनंक्रियाहीनंभक्तिहीनंजनार्दन॥यत्पूजितंमयादेवपरि
पूर्णंतदस्तुमेइति॥ततःपुनरष्टोत्तरसहस्रंमूलमंत्रेणहुत्वांगानांदशांशेनपूर्णाहुत्यंतंकृत्वा स्वस्तिवाचनं
कारयित्वा इन्द्रादिभ्योबलिंदत्वाऽऽचम्यप्रोपंसमापयेदिति। इतिचतुर्थीकर्मविधिः॥अथशैवेचंडपूजा॥
चतुर्थीकर्मदिनेदिनांतरेवाऽमुकलिंगप्रतिष्ठांगतयाचंडप्रतिष्ठांकरिष्ये॥इतिसंकल्प्यप्रासादाद्बहिर्गर्भगृ
हाद्वेद्यंतराले ईशान्यांचंडस्थानेपीठादौचंडमूर्तिंसंस्थाप्यपूजयेत्॥तत्रध्यानम्॥रुद्राग्नेःप्रभवंचंडंकज्ज
लाभंभयानकं॥शूलदंडधरंरौद्रंचतुर्वक्त्रंचतुर्भुजं॥मुखोद्गीर्णमहाज्वालंरक्तद्वादशलोचनं॥जटामुकुटखं
डेन्दुमंडितंफणिकंकणं॥व्यालयज्ञोपवीतंचसाक्षसूत्रकमंडलुं॥श्वेतपद्मासनासीनंभक्तिमहार्त्तिनाशन

= १ ओषधयः प्रतिमोदध्वमेनं पुष्पवतीः सुपिप्पलाः ॥ ६ = १ समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत । अरिष्टा अस्माकं वीरा मा परासेचि मत्पयः ॥ १ = ॥ १ ॥ अयं वो गर्भ ऋत्वियः प्रत्नं सधस्थमासदत् = १ = ॥ ६ = २ पंच नद्यः सरस्वतीमपियंति सस्रोतसः । सरस्वती तु पंचधा सो देशे भवत्सरित् ॥ २ = ॥ २ ॥

तशर्करौषधिपुष्पफलकुशरत्नगंधपंचगव्यादिकं च ततः । समुद्रं वः प्रहिणोमीति मंत्रेण देवायार्घ्यं समर्प्य स्नापयेत् । तद्यथा । पंचनद्य इति पंचगव्येन ० दधिक्राव्ण इति दध्ना ० आप्यायस्वेति क्षीरेण ० तेजोसीति घृतेन ० मधुवाता इति मधुना ० देवस्य त्वा ० सरस्वत्यै भैषज्येनेति । पुष्पोदकेन परिवाजपतिः कविः ० रत्नोदकेन । देवस्य त्वेति कुशोदकेन । अग्न ऽ आयाहीति फलोदकेन । गायत्र्या गंधोदकेन । ओषधीः प्रतिमोदध्वमिति सहदेवीव्याघ्रीबला ऽ तिबलाशंखपुष्पीवचासिंहीसुवर्चलोदकेन ॥ समुद्रज्येष्ठा इति पूर्वकल्पितशीतलजलेन ॥ वसोः पवित्रमिति सहस्रधाराकुंभेन । ततस्तूष्णीं स्नपनम् ॥ ततः अंधस्थांधो वो इति पंचवर्णसूत्रेण नीराज्य बलिं हरेत् ॥ मुंचंतु मा शपथ्यादिति कौतुकं विमुच्य सुगंधवस्त्रेण पंच नद्य इति देवं परिमार्ष्टि ॥ मंदाकिन्यास्तु यद्वारि सर्वपापहरं शुभम् ॥ तदिदं कल्पितं देव सम्यगाचम्यतां त्वया ॥ आचमनीयं निवेदयेत् ॥ वेदसूक्तसमायुक्ते यज्ञसामसमन्विते ॥ सर्ववर्णप्रदे देव वाससी ते विनिर्मिते ॥ इति वस्त्रयुग्मं ॥ शरीरं ते न जानामि चेष्टां नैव च नैव च ॥ मया निवेदितं भक्त्या चंदनं प्रतिगृह्यतामिति ॥ कुंकुमकर्पूरयुक्तचंदनं ॥ मणिमुक्ताप्रवालाद्यैः स्वर्णपु

सरस्वत्यै भैषज्येन सम्राज्या-

तेजोसि तेजो मयि धेहि २

६ = वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारं । देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः ॥ ६ = टी० पं० ६ की० ॥
५ = अंधस्थांधो वो भक्षीय महस्थ महो वो भक्षीयोर्जस्थोर्जं वो भक्षीय रायस्पोषस्थ रायस्पोषं वो भक्षीय ॥ ५ ॥ = टी० पं० ५ की० ॥ ॥

मंत्रेणाशिषोदद्यात्॥यथाशक्तिब्राह्मणभोजनम्॥क्वचिच्चंडोनास्तीतिनिविक्रमः॥बाणलिंगेचलोहेचसि
द्धलिंगेस्वयंभुवि।प्रतिमासुचसर्वासुनचंडोधिकृतोभवेदिति॥इतिचंडपूजा॥अथाचलप्रतिष्ठाबोधायन
नाप्युक्ता॥तत्रशुचौदेशेमंडपंतद्दक्षिणतःप्रतीच्यामुदीच्यांईशान्यांवाकुंडंकुर्यात्॥मंडपाकरणपक्षेकुंडस्थाने
स्थंडिलंकुर्यात्।तदुत्तरतःस्नानवेदीस्नानोपकरणानितैर्ऋतेवास्तुमंडलंमध्येवेद्यांसर्वतोभद्रादिमंडलं
विष्णुप्रतिष्ठायांसर्वतोभद्रंशिवप्रतिष्ठायांलिंगतोभद्रं।तदुत्तरतःस्वस्तिकोपरिशय्यास्थानंचकृत्वापूर्व
दिनेप्रतिष्ठादिनेवादेशकालौस्मृत्वादाहादिदोषदुष्टायामस्यांमूर्तौपुनर्देवकलासान्निध्यार्थमायुःश्री
सर्वफलासुभत्तुपुत्रावाप्त्यादिसुखकामईश्वरप्रीतिकामोवापरिवारदेवतोपेतामुकमूर्तेश्चलप्रतिष्ठांक
रिष्ये इतिसंकल्प्य तदंगत्वेनगणेशपूजापुण्याहवाचनमातृपूजनाभ्युदयिकश्राद्धानिकृत्वागुरुमष्टौचतुरो
वाऋत्विजश्चवृत्वापूजयेत्॥ततोमंडपकरणपक्षेगुरुर्मंडपप्रतिष्ठामग्निस्थापनंचकृत्वाऽऽग्रहस्थापनं
केचिदिच्छंतिस्थाप्यदैवत्यंनैवारंचरुंश्रपयित्वाऽऽज्यभागांतेपलाशोदुंबराश्वत्थापामार्गसमिधांप्रत्येकम

मिति॰ एवं ध्यात्वा॰ ॥ ॐ चंडासनाय नमः । चंडमूर्तये नमः । ध्वनिचंडेश्वराय हुं फट् स्वाहेति मंत्रेणावाह्य । ॐ चं
डहृदयाय हुं फट् नमः । ॐ चंड शिरसे हुं फट् नमः । ॐ चंड शिखायै हुं फट् नमः । ॐ चंडकवचाय हुं फट् नमः
। ॐ चंडास्त्राय हुं फट् करयोरस्त्रं । ॐ चं सद्योजाताय हुं फट् नमः । ॐ चिं वामदेवाय हुं फट् नमः । ॐ चुं अ
घोराय हुं फट् नमः । ॐ चें तत्पुरुषाय हुं फट् नमः ।। ॐ चों ईशानाय हुं फट् नमः ॥ इति न्यासान्कृत्वा षोडशो
पचारैः संपूज्य विज्ञापयेत् ॥ यावत्तिष्ठति लोकेस्मिन् देवदेवो महेश्वरः ॥ तावत्कालं त्वया देवस्यात्र त्वं शिव
सन्निधाविति ॥ ततो दिग्बलिं दत्त्वा भूतानि विज्ञापयेत् ॥ यावत्कालं महादेवो लिंगमाश्रित्य तिष्ठति ॥ ताव
त्कालं तु रक्षार्थं यूयं तिष्ठत सर्वदेति ॥ ततो गुरुः कर्मशेषं संपाद्य भद्रासने यजमानमुपवेश्याभिषिंचेत् ॥ त
त्र देवस्य त्वेति॰ शन्नो देवीरभिष्टये॰ अथर्वणसाम । सुरास्त्वामभिषिंचंत्वित्यादयश्च मंत्राः ॥ ततो यजमानो
महाजलाशये अवभृथस्नानं कृत्वा मंडपमागत्य गुर्वादीन्संपूज्य हिरण्यादिदक्षिणां दत्त्वा सोपस्करां गां
चदद्यात् । गुरुश्च समस्तजगद्गुरुर्नित्यं स्थिरमनुग्रहकारकः ॥ शिवं सानुचरं स्नाहः सर्वदा सर्वकामद इति

प्र॰म॰ ३०

ततोभक्ष्यभोज्यादि सर्वादि दर्शयेत्। तदाग्रेकोपिन तिष्ठेत्। ततो दर्भेष्वासीनो दर्भान्धारयमाणः पुरुषसूक्तेन स्रु
त्वा वंशपात्रे पंचवर्णान्वितमन्नं प्रक्षिप्य देवं नीराज्य॥ ॐ नमो भूतादिपतये दीप्तमूलधराय मापतये सर्वविद्या
धिपतये रुद्राय नमः शिवमगर्हितं कर्मास्तु स्वाहेति बलिं दत्वाचामेत्॥ ततो ब्रह्माद्याः सर्वतोभद्रमंडलदेवता आ
वाह्य गंधादिना संपूज्य स्थाप्य देवं तत्तल्लिंगमंत्रैरावाह्य कर्णिकायां प्रतिष्ठाप्य गंधाद्यैः संपूज्य कुंडे मंडले देवता
नां नाममंत्रैर्दश दश तिलाहुतीर्हुत्वा शय्यायां देवमारोप्य पुरुषसूक्तोत्तरनारायणाभ्यां ब्राह्मणैः सहोपतिष्ठेत्॥ त
तो देवे पुरुषात्मने नमः प्राणात्मने॰। इति शरीरव्यापकं न्यसेत्। प्रकृतितत्वाय॰ बुद्धितत्वाय॰ अहंकारतत्वाय॰ न
मस्तत्वाय॰ हृदि। शब्दतत्वायेति शिरसि। स्पर्शतत्वायेति त्वचि। रूपतत्वायेति हृदि। रसतत्वायेति वस्तौ। गंधतत्वा
य पादयोः। श्रोत्रतत्वाय कर्णयोः। त्वक्तत्वाय सर्वशरीरे। चक्षुस्तत्वाय चक्षुषोः। जिह्वातत्वाय॰ जिह्वायां। घ्राणत
त्वाय॰ घ्राणे। वाक्तत्वाय॰ वाचि। पाणितत्वाय॰ पाण्योः। पादतत्वाय पादयोः। पायुतत्वाय॰ पायौ। उपस्थतत्वाय॰
उपस्थे। पृथ्वीतत्वाय पादयोः। अप्तत्वाय॰ वस्तौ। तेजस्तत्वाय हृदि। वायुतत्वाय॰ घ्राणे। आकाशतत्वाय शिरसि

राम॰ ३०

ष्टसहस्रमष्टशतमष्टाविंशतिमष्टौवाप्रतिदैवतंलोकपालमंत्रैर्व्याहृतिभिर्वाजुहुयात्॥ तावत्संख्याकमा
ज्यहोमंकृत्वास्थाप्यदेवताकमंत्रेणसमित्तिलाज्यानांप्रतिद्रव्यंदशदशाहुतीःस्विष्टकृतंचहुत्वाऽष्टसहस्र
मष्टशतंवास्थाप्यदेवतामंत्रंजपेत्॥ अथयजमानोगुरवेवरंदद्यात्॥ ततोगुरुर्देवंपंचगव्यैःपंचामृतैश्चपृ
थक्तत्तन्मंत्रैः शन्नोदेवीरितिसंस्नाप्यकलशेनचसंस्नाप्य श्रीखंडाद्यैरनुलिप्योष्णोदकेनप्रक्षाल्यपुनश्च
तुर्भिःकलशैःसमुद्रज्येष्ठाद्यैस्ताद्यभिषेकमंत्रैरभिषिच्य॰ भद्रपीठेनिवेश्यतत्रपरितोष्टौकलशान्तोयपूर्णान्
पूर्वादिक्रमेणसंस्थाप्यसप्तमृदःपल्लवान्कुशान्पूगाल्मुदकंप्रस्रवणोदकंयवान्पुष्पाणिफलानिचक्रमे
णनिक्षिप्यस्थापनक्रमेणकुंभैःस्नापयेत्॥ तत्तन्मंत्राः॥ आपोहिष्ठेतितिसृचः हिरण्यवर्णाःशुचयइतिचतुष्टयं
पवमानःसुवर्जनइत्यनुवाकश्चेति॰ ततोवाससीपरिधाप्यउपवीतंदत्वागंधपुष्पधूपदीपैःसंपूज्यनैवेद्यैर
ष्टभिर्दीपैर्नीराज्यहिरण्यगर्भइत्यष्टभिर्हिरण्यशलाकांगृहीत्वा॰ चित्रंदेवानामित्यर्धर्चेनदेवनेत्रेउन्मील्यां
जंतित्वामध्वरइत्यंजयित्वापुनर्मधुघृतशर्कराभिर्देवस्यत्वेत्यंजयेत्॥ मंत्रांतेअनज्मीतिवाक्यशेषः॥

प्र.म. ३१

31

नैवमंत्रेणाभिच्योतिष्ठब्रह्मणस्पतइत्युत्थाप्य विश्वतश्चक्षुरितिपुनस्थापयेद्देवस्यपुरस्तात्।ॐ ब्रह्मविष्णुरुद्रेभ्यो· दिक्पालेभ्यो·वसुभ्यो·रुद्रेभ्यो·आदित्येभ्यो·अश्विभ्यो·मरुद्भ्यो·कुबेराय·गंगादिमहानदीभ्यो·अग्नीषोमाभ्यां· इन्द्राग्निभ्यो·द्यावापृथिवीभ्यां·धन्वंतरये·सर्वेशाय·विश्वेभ्योदेवेभ्यो·ब्रह्मणेनमः इतिजपित्वा·प्राणप्रति ष्ठांकुर्यात्।।देवस्यपुरतोयजमानमभिषिच्य·देवमंत्रंजपित्वा·ध्रुवसूक्तेनतल्लिंगमंत्रेणपुरुषसूक्तेनगाय त्र्याव्याहृतिभिश्चदेवंप्रतिष्ठाप्य·प्रतिमायांनिजवाहनायुधपरिवारादिकंध्यात्वा·पुनःपूजयित्वामुद्रांप्रदर्श्य मूलमंत्रमष्टोत्तरशतंजपित्वास्तुत्वानत्वाचम्यस्विष्टकृदाद्युत्तरांगानिसमापयेत्।।ततोयजमानोदक्षिणांदद्या द्विप्रांश्चभोजयेच्चयथाशक्तीतिचलार्चाप्रतिष्ठा।।अथजीर्णोद्धारविधिः।।अग्निपुराणे।।जीर्णादीनांचलिंगा नामुद्धारविधिमाचरेत्।।लक्ष्मोज्झितंचभग्नंचस्थूलंवज्रहतंतथा।।संपुटंस्फुटितंव्यंगंलिंगमित्येवमादिकं ।।इत्यादिदुष्टलिंगानांस्याज्ज्यापिंडीतथाविधः।।लक्ष्मोज्झितंबाणादिक्रमेणतद्विधिनास्थापितंसत्तल्लक्षणरहि तंभग्नमनेकधाकलीभूतंस्थूलंपिंडिकाननुरूपंवज्रहतंविद्युद्धतं।।संपुटंन्युब्जं।।स्फुटितमेकदेशेभग्नम्।।

राम. ३१

रजस्तत्वाय॰ तमस्तत्वाय॰ सत्वतत्वाय॰ देहतत्वायेतिदेहे॥ ततः पुरुषसूक्तन्यासंकृत्वासंपूज्याधिवासयेत्॥ त
तोमंडलशय्ययोर्मध्येनगंतव्यं। मंडलदेवतानामुपहारनिवेदनं। तत्रसर्वान्नंब्रह्मणे। घृतान्नंसोदकमिंद्राय। ओ
ज्यान्नमग्नये। माषान्नंयमाय। कृष्णव्रीह्यन्नंसघृतं निर्ऋतये। नवनीतोदनंवरुणाय। यवोदनंवायवे। प्रियंग
वंसोमाय। गवेधुकमीशानाय। पायसंसर्वेभ्यः। ततः शय्याप्रदेशेनैचारंचरुंस्थापयित्वा तेनदिग्बलिंदत्वा॰
निशांनयेदित्यधिवासनं। प्रातः पुरोदयाद्देवमुत्थाप्य मूलमंत्रेणोपस्थाय घृतेन चरुंश्रपयित्वाभिघार्यमूलमंत्रे
णाष्टोत्तरसहस्रमष्टशतंवाहुत्वा घृतं तावद्धुत्वाचरुशेषेण। अग्नयेस्वाहा। सोमायस्वाहा। धन्वंतरयेस्वाहा॥
कुहै॰ अनुमत्यैस्वाहा। प्रजापतयेस्वाहा। परमेष्ठिने॰ ब्रह्मणे॰। अग्नयेस्वाहा॥ सोमायस्वाहा॥ अग्नयेन्नाद
य॰। अग्नयेन्नपतये। प्रजापतये। विश्वेभ्योदेवेभ्यः। सर्वेभ्योदेवेभ्यः। सर्वेभ्योभूतेभ्यः। भूर्भुवः स्वः स्वाहा। अग्न
येस्विष्टकृतेस्वाहेतिजुहुयात्। ततोयजमानोगुरवेवरंदद्यात्। ततउदितेसूर्येगुरुर्वेदीमेवंभिमुखंदेवंकृत्वा
रत्नपुष्पमूलफलौषध्यादिदर्शयित्वाताम्रपात्रेशांतिजलमादायमूलमंत्रेणशतवारमभिमंत्र्यदेवशिरसिते

कारयेत्तथा॥ उद्धारस्याहृतिः प्रोक्ता यो द्धारे हेतुरुच्यते॥ आवृत्तिः पुनः संस्कारः॥ स्फुटिते खंडिते भग्ने दग्धे वाशनिनाग्निना॥ उन्मत्तैः शत्रुभिश्चौरैः करिणा स्रोतसा हृते। लिंगे पीठादिके वापि विशीर्णे कालपर्ययात्॥ देहं जीर्णं यथा देही त्यक्त्वान्यदुपगच्छति॥ लिंगादीन्यपि जीर्णानि तथा मुंचंति देवताः॥ खंडितं चूर्णितं लिंगं प्रेताद्या आश्रयंति च॥ लिंगाद्यं सत्वशून्यत्वात्तथा च ब्रह्मराक्षसाः॥ कर्तुर्नृपाणां राष्ट्रस्य तद्ग्रामस्य विशेषतः पीडां कुर्वंति ते ह्युग्रां दुर्भिक्षं मरणादिकं॥ तस्मात्सर्वप्रयत्नेन कुर्यादुद्धरणक्रियां॥ स्वायंभुवे च दैवे च बाण लिंग तथैव च॥ ऋषिभिश्चासुरैर्दैवैस्तत्त्वविद्भिः प्रतिष्ठिते॥ लिंगे जीर्णादिदुष्टेपि नोद्धारं तत्र कारयेत्॥ इदमपि स्वयंभुवादिव्यक्तिविषयं॥ न तु दैवात्तद्व्यक्तिनाशेन तत्स्थाने स्थापितेदानींतनतादृशव्यक्तिविषयम्॥ स्वायंभुवादिलिंगानां जीर्णे पीठं परित्यजेत्॥ उक्तैर्जीर्णादिभिर्दुष्टं मानुषं तु परित्यजेत्॥ दिङ्मूढं पतितं स्थानान्मध्यस्थं स्रोतसा हृतं॥ चोरदैत्यैश्चालितं लिंगं स्थापयेन्निर्व्रणं पुनः॥ लोहाढ्यं छिन्नभिन्नांगं संधाय स्थापयेत्पुनः॥ सुवर्णाद्यष्टलोहनिर्मितं लिंगं दैवाद्भग्नं सत्तद्देवसज्ञं कृत्वा पुनः स्थापयेदित्यर्थः॥ बाहुपादशिरोही

व्यंगं पिंडिकाप्रणाल्यादिरहितं। आदिपदेन चंडालस्पृष्टादीनां ग्रहणम्। पिंडीरूपयोर्दुष्टत्वे तयोरेव त्यागो न लिं
गस्य। चालितं चलितं निम्नभरस्थं विषमस्थितम्। दिङ्मूढं पातितं लिंगं मध्यस्थं पतितं तथा। एवंविधं च संस्था
प्यं निर्व्रणं च भवेद्यदि। नादेयेन प्रवाहेण नद्या क्षिप्तं यदि। ततोऽन्यत्रापि संस्थाप्यं विधिदृष्टेन कर्मणेति॥ निम्नं
सामंतभूभागान्निम्नायां भुव्यवस्थितम्। विषमस्थितं यत्र पूजादिकर्तुं न शक्यते तस्मिन्देशे व्यवस्थितं। दिङ्मूढं
विशेषविध्यभावेपि उद्गतातिरिक्तदिक्प्रणालीकं। पातितं गर्तादौ। मध्यस्थं संपूर्णपिंडिकाभ्यंतरगतं प्रासा
दमध्यभागे स्थितं दृष्टपिकेचित्॥ एवंविधमिस्थनेन लक्ष्मोज्झितभग्नस्फुटितविशुद्धतातिरिक्तानां ग्रहणं।
तेन जघन्यो निर्व्रणशब्दोपि लक्ष्मोज्झिताद्यतिरिक्तानामेवोपलक्षकः। पीठाच्च चालितं लिंगं निर्दोषं तु भवेद्य
दि। ततो वै स्थापयेत्तत्र जपेद्धृत्सम घोरकं। त्यजेत्तद्दोषितं लिंगं भ्रूपचाद्यैश्च सेवितं॥ लिंगांतरं प्रतिष्ठाप्य वि
शुद्धिमधिगच्छतीति। सिद्धांतशेखरे क्ते॥ तत्रैव। लिंगादीनां च जीर्णानां प्रोच्यते विधिरुच्छ्रितो। सर्वारिष्ट
विनाशार्थं सर्वप्राणिहितार्थकः॥ लिंगस्य पिंडिकायाश्च प्रतिमायुखलिंगयोः॥ सर्वेषां परिवाराणां हर्म्यप्रा

रितिनिश्चितं॥सहस्राधिकहोमेन तस्य चालनमीरितं॥स्थापनं शतहोमेन तस्य लिंगस्य चोदितं॥एवं बहुविधे
स्तंत्रैर्दोषाश्च बहुधोदिताः॥परीक्ष्य बहुधा तांश्च जीर्णलिंगं समुद्धरेत्॥हयशीर्षागमेपि॥जीर्णोद्धारविधिं व
क्ष्ये संक्षेपात्मम व्रवीमि ते॥चालितोत्पाटिता भूमिः केनचित्स्थापककर्मणा॥चं डालवत्यसंस्पर्शदूषिता वह्निना च
या॥स्वयमापतिता जीर्णा नदीवेगादिपातिता॥अस्पृश्यजलसंस्पृष्टा विप्रक्षतजदूषिता॥पतिता द्युर्चिता स्त्रे
ष्मविण्मूत्रादिविदूषिता॥सव्रणा लक्षणोपेता संस्कार्यो देशिकेन तु॥भूमिर्लिंगभोश्वरप्रतिमा च॥चंडालच
तोतस्पृष्टा॥असंस्पर्शो निषिद्धस्पर्शः॥जीर्णा कालबाहुल्येन क्षारादिसंबंधेनैव विशीर्णा॥सव्रणा एकदेशे
भग्ना॥देशिक उपासकः॥पूर्वोक्तेन विधानेन वैदिकेन सुरोत्तम॥अचलां दूषितामेवं स्थापयेद्विधिनोद्धृतां॥
पूर्वोक्तेन चलार्चाप्रतिष्ठाप्रकारेण॥एवं विधिनोद्धृतापीत्यन्वयः॥वक्ष्यमाणप्रकारेणोद्धृतामित्यर्थः॥पूर्वपी
ठं परित्यज्य यद्यन्यद्दापितह्नं॥ततो यथोक्तविधिना प्रासादे सन्निवेशयेत्॥दुष्टं पूर्वासनं परित्यज्यान्यस्मिंस्त
त्प्रासादगत आसने यथोक्तेन चलार्चास्थापनप्रकारेण पुनः स्थापयेदित्यर्थः॥अतिजीर्णां तथा भग्नां दारवीं शै

नांकर्णनासास्यहीनकां॥तादृशींपरिवाराणांप्रतिमांपरिवर्जयेत्॥यद्द्रव्यंयत्प्रमाणंचलिंगंवाप्रतिमापिवा
वा॥तादृक्त्वेनैवमानेनतद्द्रव्येणाथकल्पयेत्॥कारयेन्नान्यमानेननान्यद्रव्येणतत्पुनः॥नान्याकारंचनान्य
त्स्थापयेत्तद्गुरूत्तमः॥स्रोतसापहृतेलिंगेप्रासादेवातदन्यतः॥तत्समीपगतेदेशेस्थापयेद्बाधवर्जिते
प्रासादेपतितेहर्म्येगोपुरेमंडपादिके॥तदाकारंचतद्द्रव्यैस्तन्मानंतत्रकारयेत्॥ कर्मयोग्याःशिलाग्राह्या
दृढकाष्ठंतथाविधाः॥हीनद्रव्यकृतेहर्म्येश्रेष्ठद्रव्यैःसमाचरेत्॥हीनंवाप्यधिकंमानमाकारंवानकारयेत्॥
एवमुक्तेनमार्गेणदोषैरुक्तैर्विचार्यच॥लिंगपीठादिकंजीर्णंतदुद्धारंतथाचरेत्॥तिथिनक्षत्रवारादितदर्थंनवि
चारयेत्॥जीर्णंचोद्धारयेद्विद्वानजीर्णंनैवचालयेत्॥जीर्णस्यधारणेदोषश्चाजीर्णचलनेतथा॥तस्मान्नधार
येज्जीर्णमजीर्णंरक्षयेद्बुधः॥सुस्थितंदुःस्थितंवापिशिवलिंगंनचालयेत्॥शतेनस्थापनंकुर्यात्सहस्रेणतु
चालनं॥अस्यश्लोकस्यव्याख्यार्थोवर्ण्यतेऽथयथागमं॥नित्यपूजादिभिर्युक्तंजीर्णाद्यमपिसुस्थितं॥हीनंपू
जादिभिर्लिंगमजीर्णमपिदुःस्थितं॥देवतास्थापितंलिंगंमोहान्निम्नत्वमागतं॥तल्लिंगंदुःस्थितंवापितत्रैव

प्र॰म॰
३४
34

वःकार्यःपंचसप्तमथापिवा॥बलिश्चविधिनादेयोयथोक्तेनसुरोत्तम॥यथोक्तेनचलार्चाप्रतिष्ठोक्तप्रकारेण॥त
तोनिवेदयेदन्यांप्रतिमांलक्षणान्वितां॥निवेदयेत्स्थापयेत्॥तत्क्षणादेवराजेंद्रतस्यदोषस्यशांतये॥संपत्तिर्वा
विपत्तिर्वानोपेक्ष्यांतत्रकारयेत्॥अपास्यपिंडिकांपूर्वामन्यांतत्रनिवेशयेत्॥यद्द्रव्यायत्प्रमाणाचयामूर्त्तिर्ह्यो
द्गताहरेः॥तद्द्रव्यातत्प्रमाणाचसामूर्त्तिस्तत्रकीर्त्तिता॥यत्प्रमाणंयदाकारंयन्मयंबिंबमुद्धरेत्॥तत्प्रमाणंत
दाकारंतन्मानंतत्रविन्यसेत्॥विहायपिंडिकांपूर्वांतद्दिनेचापरांन्यसेत्॥द्वितीयेवातृतीयेवादिवसेस्थापये
द्धरिं॥अतऊर्ध्वंभवेद्दोषोविधिनापिनिवेशिते॥अनेनैवविधानेनलेख्यादींस्तुविवर्जयेत्॥लेख्यादीन्कुड्य
लिखिताःप्रतिष्ठापिताःप्रतिमाः॥अन्यद्विकल्पयेत्तत्रतत्प्रमाणंतदाकृतिं॥एषःसंक्षेपतःप्रोक्तोजीर्णोद्धार
विधिस्तव॥सर्वेषामेवदेवानामेषसाधारणःस्मृतः॥योजीर्णविधिनाबिंबंसंस्कुर्यान्मानवोभुवि॥फलंद
शगुणंतस्यमूलान्नास्त्यत्रसंशयः॥वापीकूपतडागानांसुरधाम्नांसदानघ॥प्रतिमानांसभानांचसंस्कर्त्तायोन
रोभुवि॥पुण्यंशतगुणंतस्यभवेन्मूलान्नसंशयः॥संक्षेपोत्रनकर्त्तव्योजीर्णसंस्कारकर्मणि॥मूलाद्दशगुणंप्रो

प्र॰म॰
३४

लजामपि॥परित्यज्य प्रसेदन्यां पूर्वोक्त विधिनागुरुः॥संहार विधिनातत्रमंत्रान्संहृत्य देशिकः॥सहस्त्रंनारसिंहे
नहुत्वातामुद्धरेद्गुरुः॥संहार विधिंप्रातिलोम्येन॥मन्त्रान्कलाःसंहृत्योद्धृत्य॥नारसिंहेननृसिंहमंत्रेणहोमद्रव्य
माज्यमन्यानादेशात्॥द्दपंसंयोजयित्वातुमंत्रेणोद्दाह्यदेशिकः॥दार्वीं च दाहयेद्वह्नौशैलजांप्रक्षिपेज्जले॥
धातुजांरत्नजांवापिप्रक्षिपेन्नकरालये॥अगाधे चान्यतोयेचक्षिपेन्नद्यांमहाजले॥द्दपंद्दषीवारज्वासंयो
ज्यमंत्रेण पाशुपतेनोद्दाहयेदिति त्रिविक्रमः॥यानमारोप्यजीर्णार्चांछाद्यवस्त्रादिनागुरुः॥शंखदुन्दुभिनिर्घो
षैर्गीतवादित्रनिस्वनैः॥नीत्वागाधंजलंरम्यंभागीरथ्यामथार्णवे॥विष्वक्सेनापवीर्येणप्रक्षिपेत्तांततोगुरुः
॥यानमारोप्येत्यादिपूर्वोक्तेनएवप्रतिपादनइतिकर्त्तव्यतेत्यर्थः॥विष्वक्सेनोद्देशेनवीर्येणवीजेनगुरुर्भागी
रथ्यादिजलेतांप्रतिमांक्षिपेदित्यर्थः॥रत्नानिक्षिप्तान्यादायस्वयंदद्यात्तुदक्षिणां॥धेनवोदशवापंचस्वर्णाल
ङ्काद्यलंकृताः॥जीर्णोद्धारेप्रदातव्यागुरवेविष्णुतुष्टये॥लिंगगर्त्तेक्षिप्तानिरत्नान्यादायस्वयंयजमानोदशधे
नूःपंचवाहेमवस्त्राद्यलंकृतागुरवेदक्षिणांदद्यादित्यर्थः॥भोजनीयाविष्णुभक्तादेयमन्नमवारितं॥त्रिरात्रमुत्स

मान्भोज यित्वातु शंभुं विज्ञापयेत्ततः ॥ दुष्टलिंगमिदं शंभो शांतिरुद्धरणे स्य चेत् ॥ रुचिस्तवास्ते विधिना अधितिष्ठ च मां शिव ॥ एवं विज्ञाप्य देवेशं शांतिहोमं समाचरेत् ॥ मध्वाज्य क्षीर दूर्वाभिर्मूलेनाष्टाधिकं शतं ॥ ततो लिंगं च संस्थाप्य पूजयेत्स्थंडिले तथा ॥ लिंगं लिंगाधिष्ठितदेवतां स्थंडिले संस्थाप्येत्यर्थः ॥ ॐ व्यापकेश्वरायेति नाम्नानेन शिवार्चनं ॥ ॐ व्यापकेश्वर हृदयाय॰ व्यापकेश्वर शिरसे नमः॰ ॐ व्यापकेश्वर शिखायै नमः ॥ इत्याद्यूह्यं इत्यंगमंत्राः ॥ ततस्तन्मूलमंत्रं वारयेदस्त्रबंधनः ॥ सत्वः कोपीह यः कश्चिल्लिंगमाश्रित्य तिष्ठति ॥ लिंगं त्यक्त्वा शिवाज्ञाभिर्यत्रेष्टं तत्र गच्छतु ॥ विद्याविद्येश्वरैः युक्तः शंभुरत्र भविष्यति ॥ सहस्रं प्रतिभागं च ततः पाशुपताणुना ॥ हुत्वा शांत्यंबुनाभ्युक्ष्य स्पृष्ट्वा कुशैर्जपेत्ततः ॥ ब्रह्मशिलापिंडी लिंगात्मक देवता भागत्रय संस्कारार्थं पाशुपतास्त्रेण हुत्वा शांतिकलशोदकेन देवं संप्रोक्ष्य॰ कुशैश्च स्पृष्ट्वा होमसंख्यया पाशुपतमंत्रं जपेत् ॥ दत्त्वार्घं च विलोमेन तत्वे तत्वाधिपांस्ततः ॥ मूर्त्तिमूर्त्तीश्वरान् लिंगे पिंडिकासंस्थितान् गुरुः ॥ विसृज्य स्वर्णपाशेन वृषस्कंधस्तया तथा ॥ रज्वा वध्वा तया नीत्वा घोषमंत्रं गृणन् शनैः ॥ तज्जले निक्षिपेन्मंत्री पुष्ट्यर्थं जुहुया

क्तं पुण्यं कूपे प्रतिष्ठितं ॥ प्रतिष्ठितमिति भावेक्तः ॥ प्रतिमायां प्राप्तगुणं कूपादेः परिकीर्तितं ॥ प्रतिमादौ दशगुणं
जीर्णसंस्कारणाद्भवेत् ॥ कूपप्रतिमयोर्दशगुणप्राप्तगुणयोरल्पत्वमहत्त्वापेक्षयाव्यवस्था ॥ अग्निपुराणे ॥
सुस्थितं दुस्थितं वापि शिवलिंगं न चालयेत् ॥ शतेन स्थापनं कुर्यात्सहस्रेण तु चालनं ॥ पूजादिभिश्च संयुक्तं
जीर्णं चापि सुस्थितम् ॥ पूजया रहितं यत्तद्दुष्टमपि दुस्थितं ॥ अयं च चालननिषेधो विधिव्यतिरेकेण श
तसहस्रसंख्येऽनुक्तसंख्ये यत्वाद्रोगते ॥ गौणाश्वेश्वेत्यनेनैव ॥ चकूपकामित्याद्यः सहस्रं शतान्यमित्यादौ वा तुल्ये
न दर्शनाच्चेति न्यायविदः ॥ सिद्धान्तशेखरे तु ॰ होमगते यं संख्ये सुक्तं पद्यपि तन्नैव ॥ असुरैर्मुनिभिर्देवैस्तत्व
विद्भिः प्रतिष्ठितं ॥ जीर्णं वाप्यथवा भग्नं विधिनापि न चालयेदिति ॰ तदसुरादिप्रतिष्ठापितव्यक्तिविषयम् ॥
न तु देवातद्व्यक्तिनाशेन तत्स्थानस्थापिते दानींतनतादृशव्यक्तिविषयम् ॥ जीर्णोद्धारप्रकारोप्यत्रैव ॥ याम्ये
मंडपमीशे वा प्रस्य गृहारैकतोरणं ॥ विधाय द्वारपूजादि स्थंडिले संप्रपूजनम् ॥ द्वारपूजादि शिवकुंभपूजां तमि
ति निविक्रमः ॥ मंत्रान्तसंतर्प्य संपूज्य वासुदेवांश्च पूर्ववत् ॥ दिग्बलिं च बहिर्दत्वा समाचम्य स्वयं गुरुः ॥ ब्राह्म

प्र.स. ३६

तो भिस्तु पूर्णा पा॥ वध्नीयात्कंकणं हैमं लिंगस्योत्तानके करे॥ लिंगस्योत्तानं करं भावयित्वा तत्र हैमं कंकणं बध्नी
यादित्यर्थः॥ लिंगं संस्थाप्य संपूज्य पूर्वोक्त विधिना ततः॥ सांगं संपूजयेद्भक्त्या स्थंडिले व्यापकेश्वरं॥ लिंगा
श्रितानि भूतानि ताडयेदस्त्रमंत्रतः॥ यानि कानि च भूतानि स्थितान्यस्मिंस्तु लिंगके॥ त्यक्त्वा शिवाज्ञया तानि व्रजंतु
स्थानमीप्सितं॥ विद्याविद्येश्वरैर्युक्तः शिवो लिंगे भविष्यति॥ इति दत्त्वा शिवस्याज्ञां ततो भागत्रये गुरुः॥ हुत्वा
हुत्वास्त्रमंत्रेण तथा पाशुपतास्त्रतः॥ प्रतिभागं सहस्रं च सिंचेच्छांतिघटोदकैः॥ ब्रह्मशिलापिंडी लिंगात्मकं
दैवभागत्रयं संस्कर्तुं त्रिसहस्रमंत्रेण हुत्वा तेनैव प्रतिभागं कलशसहस्रेणाभिषिंचेदित्यर्थः॥ मूलमध्याग्रके
देवैः स्पृष्ट्वा च जपमाचरेत्॥ ब्रह्मशिलो मूलेन पिंडी मध्येन लिंगमग्रेण दर्भैः स्पृष्ट्वेत्यर्थः॥ प्राग्वत्पाशुपतास्त्रं
तु जपेद्धोमस्य संख्यया॥ सद्योजातादिवक्त्रेषु दद्यादर्घ्यं पडंगमुखं॥ दुष्टलिंगप्रतिपत्तिमाह॥ सौधं भूमौ परि

रा.म. ३६

त्याज्यं दारुजं चाग्निना दहेत्॥ सौधं सुधा निर्मितं लिंगं॥ लोहजं तेन कार्यं स्याच्छैलजं चाप्सु निक्षिपेत्॥ सुव
र्णाद्यष्टलोह निर्मितं भग्नं चेत्तेनैव सुवर्णादिना तत्कार्यमित्यर्थः॥ तत्तत्त्वेष्वेव एनं लिंगान्मूर्तिमूर्तीश्वर एनपि॥

च्छतं॥तस्मैयाद्रव्यतीनांचवास्तुशुध्येशतंशतं॥रक्षांविधायतद्दाग्निमहापाशुपतास्त्रतः॥लिंगमन्यत्ततसंस्थ
स्थापयेद्विधिवद्गुरुः॥विलोमेनपराङ्मुखसंज्ञकं॥तत्त्वतत्वाधिपमूर्तिमूर्तीशान्नावस्यंत्ते॰ सिद्धांतशेखरे॰॥
जीर्णोद्धारविधिंवक्ष्येसमासात्तन्नुचोदितम्॥ईशान्यांदक्षिणेवापिमंडपंपश्चिमामुखं॥कुर्वीतपूर्ववत्सर्वमे
कास्यंचैककतोरणं॥पूर्ववत्सर्वसंभारादि द्वारपालार्चनंकुर्यात्स्थंडिलेग्नौशिवार्चनं॥द्वारपालार्चनेमंडपप्रति
ष्टाप्रकारेण॥मंत्राणांतर्पणंकुर्याद्वास्तुदेवार्चनंतथा॥मंत्राणांदेवस्थापितकलानां॥अंतर्बहिर्वलिंदद्या
च्छिवभक्तांश्चभोजयेत्॥शिवभक्तान्यचेतित्रिविक्रमः॥द्विजान्कर्मकरादींश्चततोविज्ञापयेच्छिवं॥दोषैर्लिं
गमिदंदुष्टंशांतिरस्त्वस्यचोद्धृतौ॥तस्मादेनंविधानेनमाधितिष्ठमहेश्वर॥भवत्विंतिवचस्तेनप्रोक्तंसद्भा
वयेद्गुरुः॥तेनशिवेनप्रोक्तंशांतिर्भवत्विंतिवचोगुरुर्भावयेत्॥विज्ञाप्यैवंशिवंभक्त्याशांतिहोमंसमाचरेत्॥
मधुनाज्येनदुग्धेनदूर्वाभिर्मूलमंत्रतः॥शतमष्टाधिकंमंत्रंप्रत्येकंजुहुयात्ततः॥मंत्रंमूलमंत्रमुच्चार्यैतस्थैः
त्रिभिश्चमधुरैःसार्द्धंसमिधोघोरमंत्रतः॥शांत्यर्थेवर्तुलेकुंडेसहस्रंजुहुयाद्गुरुः॥अथवास्त्रेणजुहुयाद्द्वाद

जातीयद्रव्यनिर्मितं तन्मानं तदाकारं लिंगं तादृशीं प्रतिमां च स्थापयेत्॥ अतिजीर्णमिति॰ पूर्वोक्ताद्यपूर्ववा
क्यात्॥ पीठाच्च चालितं लिंगमिति॥ त्यजेत्सदोषितं लिंगमिति। बाहुपादशिरोहीनमिति॥ यद्द्रव्यं यत्प्रमाणं
चेति॰ सिद्धान्तशेखरोक्तेः॥ तस्मादेव वाक्यनिश्चयात्प्रतिपत्तिप्रयोजकदोषाभावाच्च युक्तानिम्नविषमस्थादि
रूढानां च वेधचालनं तेषामेव पुनः स्थापनं च॥ भग्नचूर्णितयोस्तदवयवानां प्रतिपादनपूर्वकं नूतनानां
स्थापनं॥ अनेकशकलत्वेन चूर्णितत्वेन चोद्धारपुनःस्थापनविध्योरप्रवृत्तेः॥ चालितचलितपातितप
तितमध्यस्थानां तु नोद्धारेण च त्यागः॥ किंतु तेषामेव पुनः स्थापनं॥ उद्धृतस्योद्धारासंभवान्निर्दुष्टत्वेन
प्रतिपत्तिविध्यप्रवृत्तेश्च॥ एतेनैव नदीवेगापहृतोन्मत्तशत्रुचोरहस्त्याद्यपहृतानां लाभे तान्येव पुनः॥
स्थाप्यानि॥ तेषामलाभे तु तादृशान्यन्यानि स्थाप्यानि निषिद्धस्पर्शदूषितनिषिद्धजलस्पृष्टविप्रस्तज
दूषितपतितनाद्यर्चितश्लेष्मविण्मूत्रादिदूषितानां स्वस्थानस्थितानामेव पुनः संस्कारो नोद्धरणं नापि प्रतिप
त्तिः॥ अतिजीर्णमिति पीठाच्च चालितमिति त्यजेत्सदोषितं लिंगमिति पूर्वोक्तद्वाक्यनिश्चयात्॥ अनुद्ध.

तानामेवतत्रैवसंस्कारसंभवात्॥ स्थलांतरनयनाविधानाभावाच्च॥ एतेनस्वस्थानादचलितस्याविकृतस्यचविद्युद्दग्धादेरप्येवमेवव्यवस्था॥ स्थानाच्चलितस्यतुपुनस्तत्रैवप्रतिष्ठा॥ स्थानांतरविधानाभावाच्चलितस्यविकृतस्यचत्यागस्तादृशस्यान्यस्यप्रतिष्ठाच॥ स्थूलेपूर्वंपिंडीब्रह्मशिलाद्युद्धारः॥ प्रतिपत्तिविधिनापिंडिकांतरादिनिवेशश्च॥ व्यंगेतुपूर्वंपिंडिकादीनांभग्नत्वेएवमेव॥ पिंडिकाद्यभावेतुपिंडिकाद्यंतरस्थापनमात्रमित्यादिदुष्टलिंगानामित्याग्निपुराणवाक्याल्लिंगेपीठादिकेवापीतिसिद्धांतशेखरवाक्यात्॥ पूर्वपीठंपरित्यज्येतिहयशीर्षवाक्याच्च॥ सुवर्णादिनिर्मितभंगादौतुतेनैवसुवर्णादिनातादृशंतावत्परिमाणंचलिंगादिकृत्वा तत्रैवपुनःस्थाप्यम्॥ यदितेनसुवर्णादिनातादृशंकर्तुंनशक्यंतेत्तद्समुद्रेक्षिपेत्॥ रत्नजांतुसमुद्रएवक्षेप्तव्या॥ रत्नजायदिदग्धापिस्वकांतिंनजहातितदासैवस्थाप्येतित्रिविक्रमः॥ लोहाद्यंच्छिन्नभिन्नांगमितिसिद्धांतशेखरवाक्यात्॥ धातुजारत्नजावापीतिहयशीर्षवाक्यात्॥ इतिजीर्णोद्धारविधिः॥ अथास्यप्रयोगः॥ यजमानःउद्धार्याद्दक्षिणस्यामीशान्यांवा॥

राम·

पश्चिमद्वारैकतोरणंमंडपंतन्मध्यभागेवेदिंपूर्वेभागेवर्तुलंचतुरस्रंवाकुंडंस्थंडिलंवापश्चिमेवास्तुपीठमु
त्तरेवालुकयास्थंडिलंचकृत्वाकालादिस्मृत्वामौलफलाच्छतगुणफलकामोल्पप्रतिमायांतुदशगुणफ
लकामोवाजीर्णादिदोषदुष्टस्यलिंगस्यप्रतिमायावाउद्धारमुख्यणंवाकरिष्यइतिसंकल्पयेत्॥पिंडिका
वृषगरुडप्रासादकलशेषुतुईश्वरप्रीतिकामइतिविशेषः॥सर्वत्रेश्वरप्रीतिकामोवा॥ततोगणेशपूजा·
स्वस्तिवाचनमातृकापूजननांदीश्राद्धानिनूतनप्रतिष्ठावत्कृत्वातद्वद्देवब्रह्माचार्यसदस्यान्द्वात्रिंशत्
षोडशाष्टौचतुरोवाऋत्विजोद्वारपालांश्चाष्टौचतुरोवाहूत्वावस्त्रालंकारमधुपर्कादिभिस्तान्पूजयेत्॥
अथाचार्योमंडपपूजादिशिवकुंभपूजांतंकृत्वा·वास्तुमंडलेमहावेद्यांचदेवतास्थापनंकृत्वा·पीठादौप्र
णवेनासनंदत्वा॥ॐव्यापकेश्वरएह्येहिनमः।ॐव्यापकेश्वरहृदयायनमः।ॐव्यापकेश्वरशिरसेस्वा
हा।ॐव्यापकेश्वरशिखायैवषट्।ॐव्यापकेश्वरकवचायहुं।ॐव्यापकेश्वरनेत्रत्रयायवौषट्।ॐव्या
पकेश्वरअस्त्रायफट्।ॐइतिमंत्रैःशिवमर्चयेत्॥देवतांतरोद्धारेमूलमंत्रेणार्चयेत्॥ततोग्निंसंस्थाप्यलिं

३४

राम·
३८

लिंगस्थान् विसृजेन्मंत्री पीठब्रह्मशिलागतान्॥ वृषस्थान् विसृजेत्तद्वदंगमूर्त्तिस्थितानपि॥ ततः सुवर्णपाशेन रज्ज्वा
गोचर्मजातया॥ वृषस्कंधस्थया बध्वा लिंगं पीठं च चर्मणा॥ शिवमस्त्विति तद्ब्राह्मसजनोप्याहरेद्गुरुः॥ उद्धारार्थं च
लिंगस्य तौ वृषौ प्रेरयेत्ततः॥ बहिर्नीत्वा ततो लिंगं पीठं ब्रह्मशिलावृषं॥ रथादिकं समारोप्य समुद्रे निक्षिपेत्ततः॥
स्थूललिंगोद्धृतौ बध्वा गजं वा प्रेषयेद्गुरुः॥ सौधं भूमौ परित्यज्य दारुजं चानले दहेत्॥ सर्वं वा निक्षिपेत्तोये लिंगं
वा प्रतिमादिकं॥ ततः पाशुपतास्त्रेण शांत्यर्थं जुहुयाच्छतं॥ लोकपालाणुभिस्तद्वदस्त्रशांत्यै शतं शतं॥ प्रति
दैवतं शतं जुहुयादित्यर्थः॥ रक्षां कुर्याच्च तद्धर्म्ये महापाशुपताणुना॥ तन्मानं तन्मयं लिंगं तत्र संस्थापयेत्पुनः॥ प्र
तिष्ठोक्तेन मार्गेण सर्वकर्म समाचरेत्॥ हर्म्यस्य परिवाराणां प्राकारादेः समुद्धृतौ॥ सर्वेषामपि जीर्णानामेष एव
विधिः स्मृतः॥ कर्त्तात्र दक्षिणां दद्याद्गुर्वादिभ्यो यथोदितां॥ यत्पुण्यं स्थापने प्रोक्तं तत्फलमेतदुद्धृतौ॥ अयमत्र
निर्गलितोर्थः॥ लक्ष्मोज्झितः स्फुटितविशीर्णश्वपचसेवितानां लिंगानां ताहशीनां बाहुपादशिरःकर्णनासास्य
हीनानां प्रतिमानां च विध्युक्तप्रकारेण चालनं जलादौ प्रतिपादनं च कृत्वा नूतनप्रकारेण तस्मिन्नेव स्थाने पूर्वेस

भवसर्वदेति॥चर्मण्वतीतरणिजासुभसंगमस्यसान्निध्यभाजिकृतशालिनिमध्यदेशे॥ख्याताभरेहनगरीकिलतत्रराजाराजीवलोचनरतोभगवंतदेवः॥ ॥इतिश्रीसेंगरवंशावतंसश्रीमहाराजाधिराजभगवंतदेवादिष्टमीमांसकभट्टनीलकंठकृतेभगवंतभास्करेप्रतिष्ठामयूखोनवमःसमाप्तः॥ ॥अथसूचीपत्रप्रारम्भः॥

३९

३९

गचालनार्थं मूलमंत्रेण तिलाहुतिसहस्रं हुत्वा मंडलदेवताहोमं पूर्णाहुतिं च कृत्वा ॥ जीर्णभग्नमिदं देवसर्वदो

षावहं नृणां ॥ अस्योद्धारे कृते शांतिः शास्त्रेऽस्मिन्कथिता त्वया ॥ जीर्णोद्धारविधानं च न्यपराद्धहिताव हं ॥ तद

त्राधिष्ठितान्देवभो हराभितवाज्ञयेति ॥ देवस्य जीर्णदोषं श्रावयित्वा · शिल्पिपुत्रः सांगं शिवं विसर्ज्य · यजमा

नस्य सौवर्णकंकणं बध्वा · सौवर्णखनित्रेणोद्धृत्य रथमारोप्य जनरुद्धायं पर्यंतदेशे द्रुसमूले अगाधनदीह्रदे वा

वामदेवेन क्षिपेत् ॥ प्रतिमां तु प्रणवेन क्षिपेत् ॥ दारुजं चेत्तदुत्तरे दहेत् ॥ रत्नजं लिंगं यदि निजकांतिमदेव भव

त तितदत्तदेव पूर्वेन तत्स्थापयेत् ॥ सुवर्णादिमयं तदेव सांगं कृत्वा स्थापयेत् ॥ प्रासादे त्वयं विशेषः ॥ प्रासादमंत्रा

न्खड्गे छूरिकायां वा संयोज्य नूतनप्रासादसिद्धिपर्यंतं खड्गादिकमर्चयित्वा प्रासादे सिद्धे खड्गादि मंत्रान्य

थास्थानं प्रतिष्ठाकाले न्यस्य यजमानमभिषिंचेत् ॥ ततो लिंगं प्रतिमां वा तत्रैव विधिवत्संस्थाप्य · ध्रुवा द्यौ

रित्यादिमंत्रान्पठित्वा स्थिरीकृत्य बहु संपूज्य प्रार्थयेत् ॥ ज्ञानतोऽज्ञानतो वापि यथोक्तं न कृतं यदि ॥ तत्सर्वं ·

पूर्णमेवास्तु त्वत्प्रसादान्महेश्वर ॥ कर्तृराज्ञः प्रजानां च शांतिर्भवतु सर्वदा ॥ अस्माकं शिल्पिनां चैव सुप्रीतो

पं॰ पृ॰
प्रासादविशेषः ॥ ३९ । ९ ॥ ॥ इतिप्रतिष्ठामयूखस्य सूचीपत्रंसमाप्तम् ॥ ॥ समाप्तश्चायंग्रंथः ॥ ॥
॥ श्रीकाशीविश्वनाथपुरीमे दिवाकरछापाखानामे यहपोथीछापागया शिवचरनसावकेइहां साकी
नमुहल्ले भदईनी कालीमहलकेपास जीसलेनाहोय उसैकुंजगलीके पास शिवचर
नकेदुकानपरमिलेगी ॥ लि॰ विशेश्वरउपाध्या॰ का॰ बदल॰
सम्वत् १९३६ मी॰ आषाढसुदि १५ सन् १८७९ ईशवी
जुलाई तारीख ३ शुभंभूयात्॰

40

॥श्रीगणेशायनमः॥ ॥अथसूचीपत्रम्॥ ॥ ७ ॥ ॥